न च क्रम-यौगपद्याभ्यां सामर्थ्यलक्षणं सत्त्वं व्याप्तम् क्रमाऽक्रमनिवृत्तौ च नित्यात् सत्त्वं निवर्त्तमानं क्षणिकेष्वेवावतिष्ठत इति सत्त्वयुक्तस्य कृतकत्वस्य गमकत्वम्, यतः क्षणिकत्वे सति क्रमाऽक्रमप्रतिपत्तेरसंभव एव । तथाहि—येन ज्ञानक्षणेन[1] तत्पूर्वकं वस्तु प्रतिपन्नं न तेनोत्तरकालभावि, येन चोत्तरकालसङ्गतं न तेन पूर्वकालालीढमिति कथं क्रमप्रतीतिः? योऽपि पूर्ववस्तुप्र—ीत्य(प्रतीत्य)नन्तरमपरस्य ग्राहकः स क्रमग्राही भवेत् तथा च क्षणिकत्वमस्य स्यात् बौद्धस्य च[2] काल एव नास्ति इति कथं तस्य क्रमग्रहः? भिन्नकालवस्त्वग्रहा(हे) कालाभावे[3] चानेकवस्तुरूप एव क्रम—(मः)[4] तथा, नित्यस्यापि क्रमकर्तृत्वं न विरुध्यते—यथा च नित्यस्य क्रमकर्तृत्वादनेकरूपत्वात्(त्वं) तथा क्षणिकस्यापि[5] स्यात्। अथ क्षणवद् द्वितीये क्षणे नित्यस्याप्यभावो भवेत् कार्याभावात्, अयुक्तमेतत्; कालाभावाद् भवन्मतेन। भवतु[6] वा ग्रहस्तथापि कथं क्रमाऽक्रमाभ्यां सत्त्वस्य व्याप्तिः क्रम-यौगपद्यव्यतिरिक्तप्रकारान्तरेणाप्यर्थक्रियासंभवात् न च प्रकारान्तराभावनिश्चयो दृश्यानुपलम्भात् ततो विशिष्टदेशादावेवाभावनिश्चयप्रसक्तेः[7] न सर्वत्र सर्वदा वा। नाप्यदृश्यानुपलम्भात् तदा(द)भावनिश्चयः तस्य संदेहहेतुत्वात्[8] । तस्मान्नित्येषु[9] क्रमाक्रम(मा)योगेऽपि सत्त्वानिवृत्तेः[10] कथं सत्त्वस्य "क्षणिकभा(कस्वभा)वत्वं[11] प्रमाणतः सिद्धं येनाऽन्वय-व्यतिरेकनिश्चयो भवेत्? यद्यपि क्रमाक्रमाभ्यां सत्त्वस्य व्याप्तिः प्रकारान्तराभावात् "सिद्धा च(त)थापि[12] क्रमाक्रमायोगो न नित्येषु प्रत्यक्षादिना सिद्धः नित्यानामतीन्द्रियत्वात् तदसिद्धौ न तेषु सत्त्वनिवृत्तिसिद्धिस्तदसिद्धौ[13] च न सत्त्वस्य क्षणिकस्वभावत्वसिद्धिः । किञ्च, सत्त्वात् क्रम-यौगपद्यानुमानं स्यात् ताभ्यां तस्य व्याप्तत्वात् न[14] तु क्षणिकत्वानुमानम् तत्र क्रमकर्तृत्वासंभवादिति ।

अत्र केचित् प्रतिविदधति—"प्रत्यक्षसिद्ध(द्धे) एव क्रम-यौगपद्ये । तथाहि—सहभावो भावानां यौगपद्यम्[15] क्रमस्तु पूर्वापरभावः, स च क्रमिणामभिन्न एकप्रतिभासश्च[16] तत्प्रतिभासः[17]। अथैकप्रतिभासानन्तरमपरस्य प्रतिभासः क्रमप्रतिभासः नत्वेकस्यैव अतिप्रसङ्गात्, एवमेतत् किन्तु यदै[18]कप्रतिभासः न तदा परस्य, तदा तत्प्रतिभासे यौगपद्यप्रतिभासप्रसक्तेः। तस्मात् क्रमिणोः पूर्वाऽपरक्षणाभ्यां ग्रहणे तदभिन्नक्रमोऽपि गृहीत एव, केवलं पूर्वानुभूतपदार्थाऽऽहितसंस्कारप्रबोधात् 'इदमस्मादनन्तरमुत्पन्नम्' इत्यादिविकल्पप्रादुर्भावे[19] क्रमो गृहीत इति व्यवस्थाप्यते। क्रमे(मि)णोर्ग्रहे[20]ऽपि कथञ्चिदानुपूर्व्या "विकल्पानुत्पत्तौ[21] क्रमग्रहव्यवस्थापनायोगात् अत एव क्रमिणामेकग्रहेऽपि न क्रमग्रहो व्यवस्थाप्यते। अपि च, कथं कालाभ्युपगमवादिनोऽपि क्रमग्रहः सर्वकार्याणामेककालत्वात्? न च भिन्नकालकारणोपाधिक्रमात् कार्यक्रमो युक्तः, कालस्याऽभिन्नत्वेनाभ्युपगमात् त(न त)द्योगाद् भावानां क्रमसद्भाव इति। न च पूर्वापररूपत्वात्[22] 'कालः क्रमवान्' इति वक्तव्यम्, यतस्तस्याऽपि यद्यपरकालापेक्षः क्रमस्तदाऽनवस्थाप्रसक्तिः[23]। अथ स्वरूपेण तस्य क्रमस्तथासति कार्याणामपि बहूनामसहायानां क्रमो भवेत् अस्माकं तु लोकप्रतीत्या 'पूर्वाह्ण'आदिप्रत्ययविषयो महाभूतविशेषः कालोऽस्त्येव तद्भेदात्[24] क्रमादिप्रतीतिर्युक्तैव। नापि नित्यस्य प्रकारान्तरेण कर्तृत्वसङ्गतिः[25] यत एकदेशकार्यकारणानेक[26]—(?) करणे ह्यन्यदा प्रकारान्तरेण करणेऽङ्गीक्रियमाणे वस्तुनः स्वभावभेदाद् भेदप्रसक्तिरिति नैकत्वम् पुनः पुनः कार्यकरणे च क्रम एव न प्रकारान्तरसद्भावः। न च

१–नक्षणेम तत्पूर्वं–भा० मा०।–नक्षणेन त्पूर्वं–वा० बा०। २ "न चैतच्छक्यं वक्तुम् क्रम-यौगपद्ये एव भावाना न सिद्धे व्यतिरिक्तकालपदार्थानभ्युपगमादिति"—तत्त्वस० पञ्जि० पृ० १४४ पं० १५। ३ कालो भा–वा० बा०। ४ क्रम तथा हा० वि०। ५ क्षणस्यापि वा० बा०। ६ भवकु घा वा० बा०। ७–प्रसक्तेः तत्सर्वदा वा भा० मा०।–प्रसक्तेः तत् सर्वत्र सर्वदा वा हा० वि०। ८ वादयुक्तह–वा० बा०। ९ तस्यानित्यत्वेषु वा० बा०। १० सत्त्वान्निवृत्तिः भा० हा० वि०। सत्त्वान्निवृत्तेः भां० मा०। ११ क्षणिकाभा–वा० बा०। १२ सिद्धो त–भा० मा० आ०। सिद्धो मि न्नथापि त्तमाक्रमायो न नित्ये–हा०। सिद्धो मि न्नथापि त्तथापि तक्रमायो न नित्ये–वि०। १३–सिद्धि च वा० बा० विना। १४ न क्ष–हा० वि०। १५–पद्य क्र–वि० विना। १६–सश्चात–वा० बा०। १७–स अ–आ० हा० वि०। १८ एवं हा० वि०। १९–कल्प्यप्रा–भा० मां० हा०।–कल्पाप्रा–वा० बा० आ०। २० क्रमेणोग्र–भा० आ० हा० वि०। क्रमणोग्र–मा०। २१ विकल्पानुपपत्तौ वा० बा० विना। २२–कल्प्यानु–हा०। २३–त्वात् कालात् कालः क्र–वा० बा० वि० विना। २४–दा क्र–वा० बा० आ०। २५ कर्तृसं–वा० बा० विना। २६ कारणे ह्यन्यदा भा० मा०। कारणानेक करणे व्यत्पदा वा० बा०।

प्रकारान्तरे(रेण) 'नैकदा कार्यं करोति पुनः पुनश्च करोति' इत्येवं करणमभ्युपगन्तव्यम् भावस्यावस्तुत्वप्रसक्तेः सर्वदाऽकर्तृत्वात् । अथ 'एकदा कार्यं करोति पुन(नः) पुनश्च न करोति' इति प्रकारान्तरेण करणमभिमतं तथापि न यदा ( पि यदा ) न करोति न तदा ( ति तदा ) अवस्तुत्वमेव प्रसक्तम् । तस्माद् घटादिः पदार्थोऽर्थक्रियाकारी क्रमाक्रमाभ्यां प्रत्यक्षसिद्धः 'स एवायम्' इति ज्ञानादक्षणिकश्च प्रतीयत एव । तस्यैककार्यकरणं प्रति यत् सामर्थ्यं तत् तदैव न पूर्वं न पश्चात् तत्कार्याभावात् सामर्थ्यं तु ततोऽव्यतिरिक्तमेव उत्तरकार्योत्पत्तावप्येवं द्रष्टव्यमिति सामर्थ्यभेदेन पदार्थभेदात् कथं न क्षणिक एव क्रमाक्रमयोर्नियमः ? अतो यत्र सत्त्वं तत्र क्रमाक्रमप्रतीतावपि क्षणिकत्वप्रतीतिरेव, य एव क्षणिके क्रमाक्रमयोर्नियमो नित्येऽप्ययमेवं न (?) योगः ततो घटादौ यदेतन्नित्यत्वं प्रतीतिविषयत्वेनाध्यवसितं तत् सत्त्वविरुद्धमिति क्रम-यौगपद्याभ्यामर्थक्रियाविरोधो नित्यस्य सिद्ध उच्यते । यथा च दृष्टेषु घटादिषु क्षणिकत्वव्याप्तं सत्त्वं तथाऽदृष्टेष्वप्यविशेषादिति सर्वोपसंहारेण व्याप्तिमवगत्य यथा यथा तेषु सत्त्वं निश्चीयते तथा तथा क्षणिकत्वानुमानम् यत्र च सत्त्वानिश्चयस्तत्र सत्त्वाशङ्कया शशविषाणादिष्विव न क्षणिकत्वप्रतीतिरन्यत्र प्रसङ्गसाधनात् । न च तत्राप्यनुमानवैयर्थ्यं बाधकप्रमाणादेव क्षणिकत्वस्य(स्या)निश्चितत्वादिति वाच्यम् प्राग् गृहीतव्याप्तिकस्य सत्त्वनिश्चयमात्रेणैव क्षणक्षयाधिगतेर्बाधकप्रमाणवैयर्थ्यात् । ये तु विपक्षाद् व्यावृत्तत्वेन क्षणिकत्वव्याप्तिं सत्त्वस्य सर्वत्रावगम्य तत्रैव सत्त्वात् क्षणिकत्वमनुमापयन्ति तेषां व्याप्तिग्राहकादेव प्रमाणा(णात्) क्षणक्षयस्य सर्वत्र निश्चितत्वादनुमानोत्थानमेव न स्यात् त्रैलोक्यस्य च सर्वस्य प्रत्यक्षत्वाद्धर्मसिद्धिश्च तेषां दोषः असिद्धश्च हेतुः प्राप्नोति पक्षीकृते च सर्वस्मिन् धर्मिणि बाधकं न स्यात् । यदि विपक्षाभावस्सिद्धस्तदा साध्यस्यापि सिद्धत्वादनुमानोत्थानं न स्यात् अन्यश्च धर्मी न सिद्ध इति कथं वा कस्य प्रवृत्तिरिति, यत् किञ्चिदेतत्; त(तत्) स्थितमेतत् सत्त्वविशिष्टस्य कृतकत्वस्य क्षणिकत्वेन सह तादात्म्य(त्म्यं) प्रमाणनिश्चितमिति कथं नान्वयव्यतिरेकनिश्चयः ? यद्वा सत्त्वविशेषविकलस्याऽपि कृतकत्वादेः क्षणपरिणामे साध्ये नानैकान्तिकत्वम् यतस्तस्य प्रथमे क्षणे य एव स्वभावो द्वितीयेऽपि क्षणे स एव चेत् तदा प्रथमक्षणवदभूत्वा भवनमेव प्रसक्तमिति क्षणिकत्वम् । अथ प्रथमक्षणे जन्मैव तस्य न स्थितिः द्वितीये स्थितिरेव न जन्म एवमपि क्षणिकत्वप्रसक्तिर्जन्म-जन्मिनोः स्थिति-स्थितिमतोश्चाभेदात् । न च द्वितीयेऽपि क्षणे जन्मव्यतिरेकेण स्थितिर्युक्ता । अथ तत्राऽपि जन्म तर्हि न तदा स्थितिर्द्वितीयादिक्षणभावित्वात् तस्याः एवमुत्तरोत्तरक्षणेष्वपि सर्वदोत्पत्तिरेव न स्थितिरिति क्षणक्षयित्वमेव उत्पत्तिश्च हेतुकृतेति तत्रैव कृतकत्वं(?) स्थितौ तस्मात् कृतकत्वस्याक्षणिकत्वविरुद्धत्वान्नानैकान्तिकत्वमिति सत्त्वान्तर्भूतस्याऽपि कृतकत्वस्य व्याप्तिः प्रमाणनिश्चितेत्यत्राप्यन्वय-व्यतिरेकनिश्चयः ।

परे तु सत्त्वलक्षणस्य हेतोस्तादात्म्यस्वरूपः प्रतिबन्धो विपर्यये बाधकप्रमाणनिबन्धन इत्येवं वर्णयन्ति । यत्र क्रम-यौगपद्यायोगो न तस्य क्वचित् सामर्थ्यम् अस्ति चाऽक्षणिकेषु स इ(इ)ति तेषां सामर्थ्यविरहलक्षणासत्त्वसिद्धौ ततो निवृत्तौ सत्त्वमर्थक्रियासामर्थ्यलक्षणं क्षणिकेष्वेवाऽवतिष्ठत इति सत्त्वस्य क्षणिकत्वस्वभावतासिद्धिः, अनेन हि बाधकेन प्रमाणेन सत्त्वविरोधमसत्त्व ( सत्त्वविरुद्धमसत्त्वं ) क्षणिकेभ्याकृष्यते । न च विरुद्धयोरेकत्र समवधानमिति ततो विरुद्धानैकान्तिकते अपि नाशङ्कनीये । अथ कथमर्थक्रियासामर्थ्यनिवृत्ति(त्तिः) क्रम-यौगपद्यनिवृत्तिनिमित्ता तयोस्तद्व्याप·

---

१-काराणांतरे बा० वा० । २-श्च न करोति पुनः पुनः कारणमभ्यु-बा० वा० । ३-ति पुनश्च न क-बा० वा० हा० वि० ।-ति पुनः क-भा० मा० । ४-णमभि-बा० बा० विना । ५ तदापि बा० बा० विना । ६-दा व-आ०, हा० वि० ।-दा न करोति तदा वस्तु-बा० वा० । ७-दार्थभे त् क-भा० मां० हा० वि० ।-दार्थवत् क-आ० । ८-च तयो-बा० बा० । ९-दिष्विति क्षा-बा० वा० । १०-सङ्गासा-बा० वा० । ११-सिन्नध-बा० वा० । १२-पक्षो मा-बा० वा० । १३-न्यश्चाध-बा० बा० विना । १४ कस्य वृ-बा० वा० । १५-श्चिदेतत् स्थितमतत् स-भा० मां० ।-श्चिदेतत् स्थितमन सत्व-आ० हा० वि० । १६ यथा आ० हा० वि० । १७-कल्पस्या-आ० । १८-क्रमथ बा० वा० । १९-ति क्षयित्व-मां० मां० । २०-कत्वं न स्थिते ते तस्मा-बा० वा० ।-कत्व स्थितौ भां० मां० । २१ सत्तेति बा० वा० विना । २२-सत्वो सिद्धो ततो बा० वा० । २३-सत्वं वि-आ० । २४-धमत्व-मां० मां० ।

कत्वात्? अथात्राऽपि यदि व्याप्यव्यापकभावो वाधकान्तरनिवन्धनस्त(नस्त)दा[1] वाधकान्तरं तत्राप्यन्वेषणीयम् तथा तदन्यत्रापि इत्यनवस्थाप्रसक्तेरप्रतिपत्तिः, असदेतत्; यतः क्रम-यौगपद्याभ्यां सामर्थ्यस्य व्याप्तिः प्रकारान्तरासंभवतो निश्चितेति कुतोऽनवस्था? प्रत्यक्षबलादेव च प्रकारान्तरासंभवो निश्चितः। प्रत्यक्षस्याऽभावविषयत्वविरोधात् नेति चेत्, न; भावमेव क्रमेणेतरेण[2] वा कार्योदयलक्षणं प्रतिपन्ना(पद्य)[3] अध्यक्षेण द्वैराश्य[4]व्यवस्थापनतः प्रकारान्तराभावसाधनात्। तथाहि—यथा क्रमेण यौगपद्येन[5] वा स्वकार्यमुत्पादयन्तो घटादयो भावा अध्यक्षविषयतामवलम्बन्ते[6] तदेतररूपविवेकिनो[7] ज्ञानात्मनि तथैव प्रतिभासन्ते यतः स्वस्वभावव्यवस्थितयो[8] नात्मानं परेण मिश्रयन्ते भावास्तस्याऽपरत्वप्रसङ्गात् तथा च सर्वत्र सर्वस्योपयोगादिप्रसङ्गः[9]। न चाऽसाधारणरूपाध्यासितेषु प्रतिभासमानेषु तेषु तत्राऽसतो रूपस्याऽवभासो युक्तः अहेतुकतापत्तेः एवं चाक्षसंविदं(दां) प्रतिनियतविषयता[10] प्रमाणपरिदृष्टा[11] हीयेत[12] अहेतुकत्वे प्रतिभासस्य विषयान्तराऽवभासनप्रसक्तेः[13] अक्षस्य नियामकत्वेप्यविद्यमानाऽनुकारणे[14](कारेण) न संविद्वशादर्थात्म(त्मा)नः स्वरूपमासादयेयुरिति नियतार्थाध्यवसायतः प्रवृत्तानां नार्थक्रियाप्राप्तिः स्यात् मरीचिकादिषु जलाध(ध्य)वसायिनामिव। नापि सुख-दुःखप्राप्ति-परित्यागौ स्याताभिति क्रमवत्कार्यसामर्थ्यादी[15]यमानमध्यक्षं तद्रूपमेवानुकुर्वत् इतररूपा(प)प्रतिभासविविक्ततया स्वसंवेदनेन संवेद्यमानं[16] यथाऽनुभवं पाश्चात्यं विकल्पद्वयं जनयति तत एवं[17] विभागः संपद्यते 'क्रमभावे(वि)[18] तत् कार्यं नाक्रमम्[19]' इति तस्मात् सर्वस्य तत्राप्रतिभासमानस्य 'यदेवं न भवति तत् क्रमभावि न भवति' इति सर्वस्येतरप्रकारतया व्यवस्थितेः सिद्ध एव तद्व्यतिरिक्तप्रकारान्तराभावः अन्यथा तदन्यतया तस्य व्याप्त्यभावे स्वविषयव्यवच्छेदात्[20] तद्रूपतापरिच्छेद एव तस्य न स्यात्। परिच्छेदो हि तदसाधारणरूपानुकरण[21]मेव तच्च नास्तीति तत्सद्भावे[22] वा कथं न अतद्रूपव्यवच्छेदः? यतो नाकारान्तराऽसंसृष्टरूपानुकरणस्तदन्य(णतः अन्यत् तदन्य)व्यवच्छेदनं नाम ततः सर्वस्य तदतद्रूपतया व्यवस्थितेः प्रकारान्तराभावः कथं न सिद्धिमध्यास्ते? एवमितरप्रकारप्रतिपत्तावपि ज्ञेयम्। क्रमश्च तदन्यासाहित्यमुक्तः स चैकक्षणभाविनाप्यध्यक्षेण वस्तुस्वरूपं गृह्णता तदव्यतिरिक्तो गृहीत एवेत्यप्युक्तम्[23]।

यदपि 'उपलब्धिलक्षणप्राप्तत्वे प्रकारान्तरस्य देशादिनिषेध एव स्यान्नात्यन्ताभावः अनुपलब्धिलक्षणप्राप्तत्वे विप्रकर्ष(र्षि)[24]णां नाऽभावनिश्चय इति कुतोऽध्यक्षतः प्रकारान्तराभावसिद्धिः' इत्युक्तम्[25], तदप्युक्तोत्तरमेव, यतः कार्यान्तरासाहित्यं कैवल्यमङ्कुरादेः क्रमः, यौगपद्यमप्यपरैः बीजादिकार्यैस्तस्य[26] साहित्यम्, प्रकारान्तरं च तदुभयावस्थाभावेऽप्यङ्कुरादेरन्यथाभवनमध्यक्ष(क्षं?) तस्यान्[27]यसहितस्य(स्य?) केवलस्य चाङ्कुरादिस्वभावस्य[28] भावस्य भाव उपलभ्यमान उपलब्धिलक्षणप्राप्त एव स्वभावः क्रम-यौगपद्यस्वभावबहिर्भूतो[29] नोपलभ्यते उपलभ्यवस्तुनोऽपरसाहित्ये कैवल्ये वा अपनीते

---

१ वाधकान्तरनिवन्धनं तदा आ० हा० वि०। वाधनं तदा। २ क्रमेणान्तरेण वा वा० बा० विना। ३-पत्ताध्य-वा० बा० भा० मा०। ४-राश्यं व्य-आ०। द्वैराश्यं च—

"कृतकाकृतकत्वेन द्वैराश्यं कैश्चिदिष्यते। क्षणिकाक्षणिकत्वेन भावानामपरैर्मतम्" ॥

—तत्त्वस० का० ३५२ पृ० १३२।

"इह हि नैयायिकादयः क्षणिकमेकमपि वस्तु नास्तीति मन्यमाना कृतकाकृतकत्वेन भावाना द्वैराश्यमेवस्थापयन्ति ××× । अपरैस्तु वात्सीपुत्रीयादिभि क्षणिकाक्षणिकत्वेनापि भावाना द्वैराश्यमिष्यते"।

—तत्त्वसं० पञ्जि० पृ० १३२ पं० ५ तथा ७।

५-पद्येन स्व-वा० बा० विना। ६-म्यन्ते तदित-वि०।-म्यन्ते न तदे-वा० बा०। ७-किनऽज्ञा-वा०बा०। ८ एतदर्थकं "सर्वभावाः स्वभावेन" इत्यादि-पद्यं पूर्वं समावातम्-पृ० २४३ पं० १७ तथा टि० अ० २०-२१। तदेव च पद्यं विवृते सिद्धिवि० टी० लि० पृ० ५३ प्र० पं० १। तत्त्वोपप्लवे लि० पृ० १२७ द्वि० पं० २। ९ च सर्वस्यो-भा० मा०। १०-यतावि-वा० बा०। ११ प्रताण-आ० हा०। प्रतारण-वि०। १२ हीयते आ० वि०। १३-सक्तेरस्य नि-वा० बा०। १४-कारणे वि०। १५-मर्थ्यादी-वा० बा०। १६ संविद्य-आ०। १७ एव हा० वि०। १८-माव त-वा० बा०। १९ नाक्रम-वा० बा० विना। २०-दा त-वा० बा०। २१-नुकार-हा० वि०। २२-त्समा-भा० मा० आ० हा०।-त्सामा-वि०। २३ एवेत्युक्तम् आ०। २४-कर्पणा ना-हा० वि०। २५ पृ० ३२४ पं० १०। २६-स्तस्या सा-हा० वि०। २७-स्यान्य हि-वा० बा० विना। २८-स्वभावस्य साव उप-हा० वि०।-स्वभाव उप-वा० बा०। २९-हिर्भूते नो-वा० बा०।

तद्विविक्तदेशाद्य(ध्य)वसायिनोऽध्यक्षस्यानुभवाद्भावसिद्धेः । अङ्कुरादेस्तु(??)स्य कार्यस्य क्रमाक्रमभावव्यतिरेकेणाभावेऽन्यदाभावो न(??) क्षतिमावहति तस्मात् प्रत्यक्षत एव प्रकारान्तराभावसिद्धिः (द्धेः) क्रम-यौगपद्ययोगेन कथं न सामर्थ्यस्य व्याप्तिर्भवेत्? अत एवं न्यायाद् देश-कालविप्रकर्षिणो भावास्तथाविधं कार्यं ये विदधति क्रमेतराभ्यामन्यथा न ते कर्तुमर्हन्ति अन्यथा तस्यैवासम्भवात्। तथाहि—यद्यपि देशादिविप्रकृष्टता तेषां तथापि कार्यस्य भावो दृष्टकार्यधर्मव्यतिरेकेण न सम्भवति कार्यमात्रस्य विशेषाभावात्, कार्यता हि कस्यचिद् भावे भवनम् तच्च अन्यसहितस्य केवलस्य वा नान्यथा इत्यत्र प्रत्यक्षाऽनुपलम्भतः सिद्धम् यथा च प्रत्यक्षानुपलम्भैस्तद(?)भावभावित्वसिद्धेः कार्यतायामङ्कुरादेः सर्वत्र तथैव तल्लक्षणव्यवस्थाविशेषाभावात् तथा कार्यस्य भावोऽपि प्रकारद्वयेन सर्वत्र नान्यथा विशेषाभावाद् भवनमात्रस्येत्यनुपलब्धिलक्षणप्राप्तानामपि क्रम-यौगपद्याभ्यामर्थक्रियासामर्थ्यस्य व्याप्तिः । अनुमानतोऽपि सर्वत्र प्रकारान्तराभावः सिद्ध्यत्येव। तथाहि—अन्योन्यव्यवच्छेदरूपाणामेकनिषेधेनापरविधानात् तस्याऽपि प्रतिषेधे विधि-प्रतिषेधयोरेकत्र विरोधादुभयनिषेधात्मनः प्रकारान्तरस्य कुतः सम्भवः? प्रयोगश्चात्र—यत्र यत्प्रकारव्यवच्छेदेन तदितरैकप्रकारव्यवस्थापनम् न तत्र प्रकारान्तरसम्भवः, तद्यथा नीलप्रकारव्यवच्छेदेनानीलप्रकारव्यवस्थायां पीते, अस्ति च क्रमाऽक्रमयोरन्यतरप्रकारव्यवच्छेदेन तदितरप्रकारव्यवस्थापनं व्यवच्छिद्यमानप्रकारविपर्यीकृते सर्वत्र कार्यकारणरूपे भाव इति विरुद्धोपलब्धिः । व्यवच्छिद्यमानप्रकारेतरव्यवस्थापनं प्रकारान्तरत्वं प्रकारान्तरंश्च (?) ततो बहिर्भावलक्षण इत्यनयोस्तथाऽन्यथारूपयोः परस्परपरिहारलक्षणत्वात्। न च अत्रापि बाधकान्तराशङ्कया अनवस्थानमाशङ्कनीयम्(??) पूर्वप्रसिद्धस्य विरोधस्य स्मरणमात्रत्वविरुद्धोपलब्धिषु हि धर्मिणि सद्भावमुपदर्शि विरोधमेव बाधकं(??) तस्माद् विरुद्धयोरेकत्रासम्भवात् प्रतियोग्यभावनिश्चयः शीतोष्णस्पर्शयोरिव भावाभावयोरिव वेति कुतोऽनवस्था?

अथ कथं क्रमयौगपद्यायोगोऽक्षणिकेषु भावेषूच्यते ? न तावद् अक्षणिकाः क्रमेणार्थक्रियाकारिणः अकारकावस्थाऽविशेषात् प्रागेव द्वितीयादिक्षणभाविनः कार्यस्य का(क)रणप्रसङ्गाच्च तत्कारकस्वभावस्य प्रागेव सन्निधानात्। न च तदैव सन्निहितोपा(त्पा)दकानां कार्याणामनुदयो युक्तः पश्चा(श्चा)दपि तत्प्रसक्ते(क्तेः) । न च सहकारिक्रमात् कार्यक्रमः इति वक्तव्यम् यतः सहकारिणः किं विशेषाधायित्वेन तथा व्यपदिश्यते(न्ते), आहोस्विद् एककार्यप्रतिनियता(मा)चक्षुरादय इवाक्षेपकारिणः स्वविज्ञाने? तत्र यदि प्रथमो विकल्पः, स न युक्तः, तज्जनितविशेषस्यार्थान्तरत्वप्रसक्तेः यतो न तस्मिन्निष्पन्ने पश्चान्निष्पद्यमानो भिन्नहेतुको वा तत्स्वभावो युक्तः "अयमेव हि भेदो भेदहेतुर्वा विरुद्धधर्माध्यासः कारणभेदश्च" [ ] ततश्चेत्र भेदो न कचिदप्ययं भवेत् अन्यनिमित्ताभावात्। प्रतिभासभेदादिति, ननु प्रतिभासभेदोऽपीतरेतरप्रतिभासाभावरूपतया विरुद्धधर्माध्यासरूपता(तां) नातिवर्त्तते, भेदे वा(चा)तिशयस्य तदवस्थ एवासौ भाव

१-रादेस्तु ¯¯म्य का-आ० ।-रादेस्तु म्य का-हा० ।-रादे स्य का-वा० बा० ।-रादेस्तु म-वि० । २-च न न्या-वा० बा० । ३-था ते वा० बा० । ४-मर्हति वा० बा० आ० । ५-कार्यस्या भा-आ० हा० वि० । ६ दृष्टा का-हा० । ७-तस्या के-वा० बा० । ८-म्भतस्त-वा० बा० । ९-वाद् भवनकार्यस्य भावि प्रकार-वा० बा० । १०-त्र यत्र त् प्रका-वा० बा० मां० भा० । ११-लब्धि व्यव-वा० बा० ।-लब्धि विद्य-वि० ।-लब्धि द्यमान-आ० हा० । १२-स्थापनं रतत्वं प्रकारान्तरत्वं प्रकारान्तरश्च संभवश्च ततो वा० बा० ।-स्थापनं प्रकारेतरव्यवस्थापनं प्रकारान्तरश्च ततो भा० मां० । १३-थारू-आ० वा० बा० विना । १४-लब्धि हि आ० हा० वि० । १५ तस्मा यनतरं प्रकारान्तरकत्रा संभ-वा० बा० । १६-वयोरिवेति आ० । १७-धानन्न च वा० बा० । १८ कार्याक्र-वा० बा० । १९ प्रमेयक० पृ० ४ प्र० पं० ४ । २०-था व्युप-वा० बा० । २१ इव क्षेप-वा० बा० । २२-न्तरप्र-वा० बा० । २३ न भाव इति पश्चान्निष्पद्यमानो वा० बा० । २४-भावात् प्रतिभासभेदोपीतरेतर-वा० बा० । २५ नाति प्रवर्त-वा० बा० । २६ "भेदे सम्बन्धासिद्धेस्तदवस्थमेव अकारकत्वमेतेषां पूर्वावस्थायामिव पश्चादपि अनुषज्यते",— प्रमेयक० पृ० ४ प्र० पं० ५ । २७-शयतदवस्था एवा-वा० बा० ।

इति पश्चादप्यकारकः पूर्वावस्थायामिति(मिव)। तस्मादेवातिशया(यात्) कार्यस्योत्पत्तेस्तत्र भावे कारकव्यपदेशो विकल्परचित एव भवेत्।

अथ द्वितीयो विकल्पोऽभ्युपगमविषयः, सोऽपि न युक्तः; यतो न नित्यानामेककार्ये प्रतिनियमलक्षणं सहकारित्वमस्माभिरपह्नूयते किन्तु अक्षणिकत्वे प्राक् पश्चात् पृथग्भावसम्भवात् कार्यस्य तथा क्रियाप्रसङ्गेन 'सहैव कुर्वन्ति' इति सहकारित्वनियमो न युक्तिसङ्गतो भवेत् यतो न ति (ते) साहित्येऽपि पररूपेणैव कार्यकारिणः स्वयमकारकाणामपरयोगेऽपि तत्कारित्वासम्भवात् सम्भवे वा परमार्थतः कार्यनिर्वर्त्तको भवेत्, स्वात्मनि तु कारकत्वव्यपदेशो विकल्पनिर्मित एव भवेत्। एवं च नार्स्यानुपकारिणो भावं कार्यमपेक्षेतेति तद्विकलेभ्य एव सहकारिभ्यस्तत् समुत्पद्येत अथवा तेभ्योऽपि न भवेत् स्वयं तेषामप्यकारकत्वात् पररूपेणैव कर्तृत्वाभ्युपगमात्। अतः सर्वेषां स्वयमपर्कतृकत्वा(मकर्तृत्वात्) पररूपेणाप्यकर्तृत्वात् सर्वथा कर्तृत्वोच्छेदतो न कुतश्चित् किञ्चिदुत्पद्येत। तस्मात् स्वरूपेणैव कार्यस्वभावाः कर्त्तार इति न कदाचित् तत्क्रियाविरतिरिति कुत एकार्थक्रियाप्रतिनियमस्वरूपमक्षणिकानां सहकारित्वम्? सामग्रीजन्यस्वभावतया कार्यस्य तस्याश्चापरापरप्रत्यययोगरूपतयोयोग( याऽयोगे ) प्रत्येकं तत्क्रियास्वभावत्वेऽप्यनुत्पत्तिरिति चेत्, व्याहतमेतत्, यतोऽयमेकोऽपि क्रमभाविकार्योत्पादने समर्थः ततः कथमेषां भिन्नकालापरापरप्रत्यययोगलक्षणानेकसामग्रीजन्यस्वभावता? एकेनापि तेन तज्जननसामर्थ्य(र्थ्यं) बिभ्राणेन तानि जनयतव्यानि(जनयितव्यानि) न ह्यन्यथा केवलस्य तज्जननस्वभावता सिद्ध्यति, तस्याः प्रा(स्याः कार्यप्रा)दुर्भावानुमीयमानस्वरूपत्वात् कार्याणि च कारणान्तराण्यपेक्षमाणानि कथमयमुपेक्षते? अनादृत्य तानि हठादेव जनयेत् कार्याणि। यो हि यन्न जनयति नासौ तज्जननस्वभावः, न चायं केवलः कदाचिदप्युत्तरोत्तरकालभावीनि प्रत्ययान्तरापेक्षाणि कार्याणि जनयतीति तत्स्व( ति न तत्स्व)भावो भवेत्। अतत्स्वभावश्च प्रत्ययानन्त(यान्त)रसन्निधानेऽप्यस्वरूपो नैव जनयेत्। स च केवलोऽपि तज्जननस्वभाव इति ततस्तेषामुत्पत्तिं ब्रु(ब्र)वीषि कार्याणि च सामग्रीजन्यस्वरूपतया सामग्र्यन्तराणि अपेक्षन्त इति ततः केवलादनुत्पत्तिं वदसि एते चोत्पत्ति–अनुत्पत्ती तज्जन्यत्वातज्जन्य(न्यत्व)स्वभावते विरुद्धे कथमेकत्र स्याताम्? अथ कारणे(णैः) हेत्वन्तरापेक्षकार्यजननस्वभावोऽयमुत्पादित इति केवलो न जनयति, न च सहकारि सहिताऽस-

---

१ "विभिन्नातिशयात् कार्योत्पत्तौ चात्र कारकव्यपदेशोऽपि कल्पनाशिल्पिकल्पित एव"–प्रमेयक० पृ० ४ प्र० पं० ६। २–कार्ये आ०। ३ "एकार्यकारित्वेन त्वेषां सहकारित्वं नास्माभिः प्रतिक्षिप्यते किन्तु अपरिणामित्वे तेषां प्राक् पश्चात् पृथग्भावावस्थायामपि कार्यकारित्वप्रसक्तेः सहैव कुर्वन्तीति नियमो न घटते"–प्रमेयक० पृ० ४ प्र० पं० ७। ४–न्ति स–वा० बा०। ५ "न खलु साहित्येऽपि भावाः पररूपेण कार्यकारिणः स्वयमकारकाणामन्यसन्निधानेऽपि तत्कारित्वासम्भवात्"–प्रमेयक० पृ० ४ प्र० पं० ८। ६ परमार्थः आ०। "सम्भवे वा पर एव परमार्थतः कार्यकारको भवेत्"–प्रमेयक० पृ० ४ प्र० पं० ९। ७ एव च भा० मा०। ८–स्यानुपकारिणा आ० हा० वि०।–स्यानुसारिणो वा० बा०। ९ भावकार्य–वा० बा० हा०। "स्वात्मनि तु कारकव्यपदेशो विकल्पकल्पितो भवेत् तथा च अन्यस्यानुपकारिणो भावमनपेक्ष्यैव कार्यं तद्विकलेभ्य एव सहकारिभ्यः समुत्पद्येत"–प्रमेयक० पृ० ४ प्र० पं० ९। १०–कर्तृपर–वा० बा० विना। "अत सर्वेषां स्वयमकारकत्वे पररूपेणापि अकारकत्वात् तद्वार्तोच्छेदतो न कुतश्चित् किञ्चिद् उत्पद्येत"–प्रमेयक० पृ० ४ प्र० पं० १०। ११–रूपेणेवा का–हा० वि०।–रूपेणैवा का–आ०। १२–दाचि त क्रि–वा० बा०। १३–या योगारूपतया योगरू तत्क्रिया–वा० बा०। "तस्याश्च अपरापरप्रत्यययोगरूपत्वात् प्रत्येकं नित्यानां तत्क्रियास्वभावत्वेऽप्यनुत्पत्तिस्तेषामिति–"प्रमेयक० पृ० ४ प्र० पं० १२। १४ यतो यामेको–वा० बा०। १५–मर्थ ततः वा० बा० विना। १६–णानेका सा–वा० बा०। १७ तानि जनयतनि न ह्य–वा० बा० विना। "एकेनापि हि तेन तज्जननसामर्थ्यं बिभ्राणेन तानि उत्पादयितव्यानि"–प्रमेयक० पृ० ४ प्र० पं० १३। १८ "तस्याः कार्यप्रादुर्भावानुमीयमानस्वरूपत्वात्"–प्रमेयक० पृ० ४ प्र० पं० १४। १९–नयेत आ०। २०–भावीति वा० बा० विना। २१–यन्तीति वा० बा०। २२ भवेत् तत्–वा० बा०। २३–यानतर–वा० बा०।–यांनतर–हा०। २४–प्यभ्यक्त–भा० मा०। २५–त्पत्तिं घवीपि वा० बा०।–त्पत्तिं ब्रवीपि आ० हा० वि०। २६ तज्जन्यस्वभावत्वे विरुद्धे वा० बा० विना। २७–रणे हे–वा० बा० विना। २८–कारिसहितावस्थयोरस्य स्वभावप्रत्ययान्तरापेक्षस्वभावजननस्वभावतायाः सर्वदा वा० बा०।

हितावस्थयोरस्य स्वभावभेदः प्रत्ययान्तरापेक्षस्वकार्यजननस्वभावतायाः सर्वदा भावात्, असारमेतत्; यतः प्रत्ययान्तरसन्निधापि(धानेऽपि) स्वरूपेणैवास्य कार्यकारिता; तच्च प्रागप्यस्ति प्रत्ययान्तरापेक्षायाश्च ततो लभ्यस्यात्मातिशयस्याभावतोऽयोगात् उपकारलक्षणत्वादपेक्षायाः अन्यथाऽतिप्रसक्तेः। तत्सन्निधानस्यासन्निधानतुल्यत्वाच्च केवल एव कार्यं किं न करोति? अकुर्वंश्च केवलः सहितावस्थायां च कुर्वन् कथं न भिन्नस्वभावो भवेत्? अपि च, यदि सहकार्यपेक्षा कार्यजननस्वभावता तस्य सर्वदा अस्ति तदा सर्वदा कार्योत्पत्तिप्रसक्तिः। अथ सहकारिसन्निधान एव तत्स्वभावता कथं न स्वभावभेदा(दात्) वस्तुभेदं(दः) स्वभावस्यैव वस्तुत्वात्? तस्मात् सहितावस्थायाः स्वरूपेणोपकारकस्य प्रागपि तत्स्वभावत्वे कार्यक्रियाप्रसङ्गाच्चाक्षणिकस्य क्रमेण कार्यक्रियासम्भव ति (इति) न क्रमयोगः। यौगपद्यमपि तस्याऽसङ्गतम् द्वितीयादिक्षणेषु तावत एव कार्यकलापस्योदयप्रसङ्गात् हेतोस्तज्जननस्वभावस्याप्रच्युतेः। सन्निहितसकलकारणानां वा(चा)नुदयोऽयुक्तः प्रथमक्षणेऽपि तद्भावापत्तेरिति क्रम-यौगपद्यायोगादक्षणिकानामर्था(र्थ)क्रियासामर्थ्यविरहलक्षणमसत्त्वमायातमिति सत्त्वलक्षणः स्वभावहेतुः क्षणिकतायां बाधकप्रमाणबलान्निश्चिततादात्म्यो विशेषलक्षणभाक् कथं न प्रतीतः?

अथाक्षणिकानामिव क्षणक्षयिणामप्यर्थक्रियासामर्थ्यलक्षणं सत्त्वमनुपपन्नमेव, क्रमायोगस्य तत्रापि तदवस्थत्वात्। अतो न क्षणिका अपि परैरं(र)नाधीयमानस्वरूपभेदाः सामर्थ्यक्रियाक्रान्तप्रकारमुत्पादयितुं शक्ताः, न च प्रतिक्षणोदयं बिभ्राणाः परस्परतो विशेषमासादयन्ति भावभेदप्रसङ्गात्। तथाहि—असौ विशेषस्तेषां प्रागुत्पत्तेः, पश्चाद्वा? न तावत् प्राक् तेषामेव तदाऽसत्त्वात्। पश्चात् तत्स्वरूपस्याकार्यत्वात् तदुपहितानुपहितक्षणानामविवेकादिति न सहकारिभिरुपकारः। ततो निर्विशेषाणां न क्रम-यौगपद्याभ्यामर्थक्रियाकारित्वलक्षणं सत्त्वम्। तदुक्तं च—

"कः शोभेत वदन्नेवं यदि न स्यादह्रीकता।
अक्षा(क्ष)ता वा यतः सर्वं क्षणिकेष्वपि तत्समम्" ॥ [ ]

"विशेषहेतवस्तेषां प्रत्यया न कथञ्चन।
नित्यानामिव युज्यन्ते क्षणानामविवेकता" ॥

"क्रमेण युगपच्चैव यतस्तेऽर्थक्रियाकृतः।
न भवन्ति ततस्तेषां व्यर्थः क्षणिकताश्रमः" ॥ [ ] इति

तदयं सत्ताहेतुरसाधारणानैकान्तिकः क्षणिकाऽक्षणिकयोरभावात्, प्रकारान्तराभावाच्च न ताभ्यां व्यतिरिच्यत इति संशयहेतुस्तयोरिति, असदेतत्; यतो नैवमुपकारः क्षणिकानामभ्युपगम्यते। तथाहि—उपकारः समग्रकारणाधीनविशेषान्तरविशिष्टक्षणान्तरजननम्; तच्च कथमभिन्नकालेषु परस्परं क्षणिकेषु भावेषु भवेत् कार्य-कारणयोः परस्परकालपरिहारेणावस्थानां(नात्) ततः सामग्र्या एव जनकत्वादेकस्य जनकत्वाविरोधादव्यवधानदेशाः समग्र(?) एव प्रत्येकमितरेतरसहकारिणः स्वं स्वं क्षणान्तरं विशिष्टमारभन्ते तदपि चोत्तरोत्तरं तथैव तथैवान्यविशिष्टं कारणभेदाद् भेदसिद्धेः। यथा चक्षुरादयो बीजादयश्चातकि(श्चाऽकि)ञ्चित्करेभ्यः सन्निहितेभ्योऽपि न

१–क्षत्वास्व–हा० वि०। २–ताया स–आ० हा० वि०। ३–रसन्नेपि स्वरूपेणेवा–हा० वि०।–रसन्नपि स्वरूपेणेवा–आ०। रसन्नपि स्वरूपेणैवा–भा० मां०। "यत. प्रत्ययान्तरसन्निधानेऽपि स्वरूपेणैवास्य कार्यकारिता"—प्रमेयक० पृ० ४ द्वि० पं० ३। ४–याश्चा त–आ०। ५–थाति धानस्या–मां०। ६ स–का–आ० विना। ७–वभेस्तु भेदस्त्वभावस्येवस्तुभेदस्त्वभावस्यैव वस्तुत्वात् तस्मात् वा० वा०। ८–स्थाया स्व–वा० वा०। ९–मयोगा यौ–वा० वा०। १०–च्युतेऽस–वा० वा०। ११–दयो यु–वा० वा० विना। १२–काना अपि परैरनार्थ्यविरह–वा० वा०। १३–सत्ताल–वा० वा० हा०। सत्वाल–वि०। १४ अथ क्ष–आ० विना। १५ परैरनर्थायमान–वा० वा० विना। १६–कारित्वं ल–वा० वा० भा० मां०। –कारित्वा ल–हा० वि०। १७–दन्नेव वा० वा० भा० मां० हा०। १८–नामिद यु–आ० हा० वि०। १९ व्यतिरिक्तत–वा० वा० विना। २०–काराः आ० हा० वि०। २१–मग्राका–भा०। २२–न्तरं ज–आ० हा० वि०। २३–स्पर क्ष–भा० मा० हा०। २४–पु भवेत् वा० वा० विना। २५–वस्था ततः वा० वा०। २६–नदेश्यः आ० हा० वि०। २७–रभते हा० वि०। २८–त्तरं तथैवान्य–वि०। २९–श्चा त किञ्चि–भा० मां० आ०। –श्चात् किञ्चि–वा० वा०।

कार्यप्र[1]भवस्तत्सन्निधानस्याकिञ्चित्करत्वात् । न च परस्परसहकारित्वेऽप्य[2]व्यवधानतः क्षणिकानां विशिष्टक्षणान्तरारम्भकत्वमयुक्तम्, प्रथमक्षणोपनिपातिनां क्षित्यादीनां परस्परतः तथाभूतक्षणान्तरजननस्वभावा[3]तिशयलाभाभावा[4]न्निर्विशेषाणां विशिष्टक्षणान्तरजननायोगात् योगे वाध्यग्राणामपि तत्प्र[5]सङ्गो विशेषाभावादिति वक्त[6]व्यम् मा यतः (व्यम् यतः) किं कार्योत्पादानु[7]गुणविशेषविरहान्निर्विशेषास्तदु(स्त उ)च्यन्ते, आहोस्वित् तदुत्पत्तिनिबन्धनविशेषवैकल्यात्, उत विशेषमात्राभावात्? तत्र यद्याद्यः पक्षः स न युक्तः, यतो नास्मन्मते कारणस्थमेव कार्यं व्यक्तिमात्रमनुभवति यतस्तदभावे न स्यात्; अपि तु कारणं कार्यरूपविकलमेव कार्यमारभते सतः क्रियाविरोधात् भिन्नस्वभावत्वाच्च कारणात् कार्यस्य । द्वितीयपक्षाभ्युप[8]गमोऽप्ययुक्तः यतोऽव्यवहितः क्षित्यादिकारणा(ण)कलापः कार्योपा(त्पा)दानुगुणविशेषजननसमर्थो हेतुस्तद्भा(??)[9]वात्तत्प्रत्यक्षाऽनुपलम्भतः सिद्धः, केवलमत्र विवादः 'क्षित्यादयः किं क्षणिकास्तथाभूतविशेषारम्भकाः आहोस्विदक्षणिकाः' इति तत्र च साहित्येऽपि न ते पररूपेण कर्त्तारः, स्वरूपं च तेषां प्रागपि तदेवेति कथं कदाचित् क्रिया[10]विरामा इति क्षणिकतैव तेषामभ्युपगमनीया । अथ तेषां समर्थहेतुत्वम् कुतः? परस्परोपसर्प[11]ण्याद्याश्र[12]यप्रत्ययविशेषात् तदन्वयव्यतिरेकाऽनुविधा[13]नदर्शनात् तेषां च[14] न प्राक् पश्चान्न पृथग्भावः कारणाभावादिति नान्यदोदयप्रसङ्ग(??) प्रत्येकं चेति तृतीयपक्षोऽप्ययुक्तः अपरापरप्रत्यययोगतः प्रतिक्षणं भिन्नशक्तीनां भावानां कुतश्चित् साम्यादेकताप्रतिपत्तावपि भिन्नस्वरूप[15]त्वात् । नहि कारणानां भेदेऽप्येकरूपतैव भावस्याऽनिमित्तताप्रसङ्गात् । तथाहि—(??)यदि न का[16]रणभेदभेदादपि नाभेदः भेदस्वरूपं(??) च का[17]र्यम् तच्चेद् अहेतुकं विश्वस्य वैश्वरूप्यमहेतुकं भवेत् न च कदाचित् किञ्चित् एक[18]मेव वाताऽऽतपशीतादीनां यथासम्भवं सर्वत्र भेदकारणानां भावात् । ततः प्रतिक्षणं स्वभावभेदात् किञ्चिदेव कस्यचित् कारणम् न सर्वं सर्वस्येति क्षणिकानामेवार्थसामर्थ्यलक्षणं सत्त्वं सम्भवतीति नाऽसाधारणानैकान्तिकता सत्त्वस्य । अथ क्ष[19]णिकानां क्षित्यादीनां एकदैककार्यक्रियायां सर्वेषामभिन्नेनैवात्मना तत्रोपयोगोऽभ्युपगन्तव्यः अन्यथा कारणभेदात् कार्य[20]स्यापि भेदप्रसक्तिः स चै[21]का(षा)मेकभावेप्यस्ति न च तदेकं कार्यं जनयति सर्वेषां भाव इति(?) तत् कारणात् अत[22]स्तस्य सामान्यात्मनः कदाचित् कार्यकारिणोऽप्यभेदादर्थक्रियासामर्थ्यात्[23] त्वसत्त्वमिति अनैकान्तिकता हेतोः, असदेतत्; यतः किमिदं कारणं भवताऽभिप्रेतम् भेदो वा यद्भेदात् कार्यस्यापि भेदः प्रतिपाद्यते? यदि चक्षुरा[24]दिकं प्रत्येकं तदवस्थाभावि कारणम् भेदश्चानेकत्वात् तदा नायं नियमः—अनेकस्माद् भवताऽनेकेनैव भवितव्यम् विपर्यये बाधकप्रमाणाभावात् 'एकेनैवैकं कर्त्तव्यम्' इत्यत्रापि न नियम[25]कारणमुपलभ्यते । [26]किञ्च, 'एकमेकं करोति' इति कुतोऽवगतम्? तद्भावे तस्या(स्य) भावादिति चेत् समानमेतदनेकत्र । तथाहि—एकमङ्कुरादि कार्यमङ्गीकृत्य विशिष्टक्षणान्तरोत्पादनलक्ष[27]णेनाऽतिशयाधानेन क्षित्यादीनां प्रवृत्तिः त[28]त्र स्वहेतुपरिणामोपात्तधर्माणस्तदवस्थाप्राप्तास्तस्यैवैकस्य जनने समर्थाः समुत्पन्ना(न्ना ना) न्य[29]स्येति नापरं तद् जनयन्ति,

---

१-प्रसव-आ० विना । २-प्यव-वा० बा० विना । ३-वावतिश-वा० बा० । ४-वा निर्वि-वा० बा० । ५-सङ्गा वि-वा० बा० । ६-कव्यं मा यातः भा० मा० ।-कव्यमायातः आ० ।-कव्यमायात किं हा० वि० । ७-गुणावि-हा० वि० । ८-गमो यु-वा० बा । ९-द्भावाप्रत्यक्षा-वा० बा० ।-द्भावासत्प्रत्यक्षा-हा० ।-द्भावात्प्रक्षा-वि० । द्भावात् तत्प्र-वि० स० । १०-क्रियवि-वा० बा० । "तत. स्वरूपेणैव भावाः कार्यस्य कर्तार इति न कदाचित् तत्क्रियोपरतिः स्यात्"—प्रमेयक० पृ० ४ प्र० पं० ११ । ११-सर्पणाद्या-बा० वा० । १२-श्रयविशे-वा० बा० । १३-धानाद्-वा० बा० विना । १४-च प्राक् पश्चान्न पृ-वा० बा० विना । १५-रूपान्न हि बा० वा० विना । १६ कारणभेदभेदादपि नाभेदा भेदस्वरू-वि० । कारणभेदभेदाऽभेदादपि नाभेदो भेदाभेदस्वरू-वा० बा० । कारणभेदभेदाऽभेदादपि नाभेदादपि नाभेदाभेदस्वरू-भा० । कारणभेदभेदोऽभेदादपि नाभेदादपि नाभेदाभेदस्वरू-मा । १७ कार्यं तो वेदहेतुको वि-वा० बा० । १८-कमेव धाचातातपशीतादीनां आ० ।-कमेव शीतातपवातादीनां वा० बा० । १९ क्षणिकानामेकदैक-भा० मा० । २०-स्यापि भेदाप्र-आ० हा० वि० । २१-कामेप भा-वा० बा० । २२-त तस्य वा० बा० । २३-सामर्थ्यास्त्वसत्व-आ० ।-सामर्थ्यात्वसत्व-वा० बा० हा० ।-सामर्थ्यात्वेसत्व-वि० । २४-रादिकं तद्-वा० बा० आ० विना । २५-मकारिणामुप-वा० बा० । २६ किञ्चि ए-वा० बा० । २७-क्षणोनाति भा० मा० विना । २८ तव स्व-वा० बा० । २९-न्यस्यैति आ० हा० वि० ।

न चानेकोद्भूतं तद् अनेकमासज्यते यतः 'न कारणमेव कार्यं भवति' इत्येतदस्मदादिभिरभ्युपेयते येनानेकपरिणतेरनेकरूपत्वात् कार्यस्याप्यनेकत्वप्राप्ति(प्तिः) किन्तु केपुचित् सत्स्वपूर्वमेव किञ्चित् प्रादुर्भवति तद्भाव एव भावात् तत्कार्यमुच्यते इति नानेकताप्रसङ्गः। यदि त्वेष्वभिन्नं रूपं जनकं स्यात् तदा तस्यैकस्थितावपि भावात् तत्कार्यजननस्वभावत्वाच्च विशेपान्तरविकल्पा(ला)दपि ततः कार्योदयप्रसक्तिः अन्यस्सन्धि(न्यसन्नि)धावपि तस्य विशेपाभावात् तदवस्थायामपि वा न जनयेत् अतो यद्भावाऽभावानुविधायि यद् दृष्टं तत् कार्यम् त एव च विशेपास्तस्य जनका इति कुतोऽनेकान्तः? अथ सामग्रीमाश्रित्य न कारणभेदात् कार्यभेदः स्यादित्युच्यते, तदप्यसत्; सामग्रीभेदे कार्यभेदस्येष्टत्वात् कार्यस्याप्यनेकसामग्रीजनितस्यानेकत्वात् तद्वैलक्षण्ये च तस्यापि विलक्षणत्वात्। तस्मात् न सत्तालक्षणस्य हेतोरनैकान्तिकता। नापि विशेपलक्षणविरहः प्रमाणनिश्चितस्य तन्मात्रानुबन्धस्य स्वभावहेतुलक्षणस्य सद्भावात्।

यदप्युक्तम् 'कार्यहेतुप्रतिपाद्योऽपि प्रतिक्षणं ध्वंसो न भवति क्षणिकत्वेऽक्षदृशोऽप्रवृत्तेः कार्यकारणभावस्य च प्रत्यक्षानुपलम्भसाधनत्वात्' इति, तदप्यसंगतम्; यतो यदि सर्वत्र प्रत्यक्षानुपलम्भसाधन एव कार्यकारणभावस्तदा चक्षुरादीनां स्वविज्ञानं प्रति कुतः कारणताप्रतिपत्तिः? अथ तद्विज्ञानस्याऽन्येपु सत्स्वपि हेतुपु कादाचित्कतया तद्व्यतिरिक्तकारणान्तरसापेक्षत्वाच्चक्षुरादीनां तत्र हेतुत्वमनुमीयते स तर्हीहापि न्यायः समानः। तथाहि—विपयेन्द्रियादिवशात् प्रतिक्षणविशरारूणि क्रमवन्त्युपजायमानानि ज्ञानानि तथाविधकारणप्रभवत्वमात्मनः सूचयन्तीति कथं (थं न) कार्यहेतुः क्षणध्वंसितां चक्षुरादीनां प्रतिपादयेत्? कार्यक्रमाद्धि कारणक्रमः प्रतीयमानः कथं कार्यहेतुश्चलप्रतीतिर्भवतीत्यलमतिनिर्बन्धेनाऽप्रलापेपु। यदप्युक्तम् 'असतोऽजनकत्वान्न क्षणविशरारोः कार्यप्रसवः' इति, तदनभ्युपगमादेव निरस्तम्। यच्च 'अविनष्टा(ष्टाद्) द्वितीयक्षणव्यापारसमावेशवर्तिनः कार्यप्रभवाभ्युपगमे क्षणभङ्गभङ्गप्रसङ्गः' इत्यभिहितम्, तदप्यसङ्गतम्; यतो यदि व्यापारसमावेशाद् भावाः कार्यनिव(र्व)र्तका भवेयुस्तदा (??) कार्योत्पादने द्वितीयक्षणप्रतीक्षाया स्यादयो दोपा यावता प्रसवव्यापारसमावेशलक्षणदोपो (??) द्वितीयसमयप्रतीक्षाव्यतिरेकेणापि स्वमहिम्नैव कार्यका(?)रणे प्रवर्त्तन्ते यथान्यथा द्वितीयक्षणभाविव्यापारजननेऽप्यपरव्यापारसमावेशव्यतिरेकेणाप्रवृत्तेस्तत्रापि व्यापारान्तरसमावेशकल्पनातोऽनवस्थाप्रसक्तेः अपरापरव्यापारजननोपक्षीणशक्तित्वान्न कदाचनापि कार्यं कुर्युः। अथापरव्यापारनिरपेक्षा एवैकं व्यापारं निव(र्व)र्त्तयन्ति तथा सति कार्येण किमपराद्धं येनाद्यव्यापारनिरपेक्षास्तदेवं न जनयन्ति? पारम्पर्यपरिश्रमाऽप्ये(मोऽप्ये)वमेवं परिहृतो भवति। पदार्थव्यतिरेकेण चोपलभ्य स्वभावं व्यापारमभ्युपगच्छतः प्रत्यक्षविरोधश्च। न च व्यापारमन्तरेणार्थक्रिया नोपपत्तिमतीति वक्तव्यम् व्यापारेणैव व्यभिचारात्। तथा, व्यापारस्याप्यपरव्यापारमन्तरेणापि यदि कार्ये प्रवृत्तिः—अन्यथाऽत्राप्यनवस्थाप्रसङ्गात् कार्यानुत्पत्तिः स्यात्—तथा(दा) व्यावृत्त(पृत?)पदार्थस्यापि तमन्तरेणैव सा भविष्यतीति व्यर्थं व्यापारपरिकल्पनम् तत्स्वभावत एव स्वकार्यकारिणो भावा न व्यापारवशात् ते च स्व-

---

१ नचा–वि०। २–सज्यन्ते हा० वि०। ३–दस्मादिरभ्यु–वा० बा०। ४ प्राप्ति वा० बा०। प्राप्तं आ०। ५–चित् सत्स्वपू–आ०।–चित् सत्स्वत्पू–वा० बा०। ६ यदि तु तेष्वभि–आ०। यदि तु ष्वेभि–हा० वि०। ७–दात्तस्यै–वा० बा०। ८–दये प्र–वा० बा० विना। ९ नयति वा० बा०। १० यद्भावाभावात्वाविधा–आ०। यद्भावाभावात्वविधा–वि०। यद्भावानुविधा–वा० बा०। ११–मग्रीनाश्रित्या न आ० विना। १२–स न सा–वा० बा०। १३ तस्यानेकत्वात् त (न) सता(त्ता) लक्ष–वा० बा०। १४ तत्र सत्ता–वि०। १५–पणल–वा० बा०। १६ पृ० ३१८ पं० १६। १७–क्षणं त्वंसो वा० बा०। १८ तत्र भवमनु–वा० बा०। १९–मानानि तथा–वा० बा० विना। २० क्षणिध्वं–वा० बा०। २१–णध्वंसिनां चक्षु–आ० हा० वि०।–णध्वंसिनो चक्षु–मां० मां०। २२–पादत् का–वा० बा०। २३ पृ० ३१८ पं० १८। २४ यद्वा वि–मा० मा०। २५ पृ० ३१८ पं० १८। २६ प्रतीक्षास्यादयो दोषो यावता वा० बा०। प्रतीक्षाया स्यादयो दोपो यावता वि०। २७–महिम्नैव आ० विना।–महिमेवं का–वा०। २८–रणा प्र–वा० बा०। २९–वर्त्तते हा०। ३०–च ति ज–वा० बा०। ३१–श्रमाश्चैपामेवं आ० विना। ३२–या नोपरपपत्ति–(नोपपत्ति–) वा० बा०। ३३–था व्यापारमन्तरेणापि आ० हा० वि० विना। ३४–था वृत प–वा० बा०। ३५–स्यापि मन्त–आ० विना। ३६ एवं आ० हा० वि०। ३७–शास्ते च वा० बा० विना।

हेतुश्च एव तथाविधाः समुत्पन्नाः स्वसन्निधिमात्रैव(मात्रेणैव) कार्यं निवं(वै)र्त्तयति(यन्तीति) कुतः क्षणभङ्गभङ्गप्रसङ्गः ? न चानष्टात् कारणादुपजायमाने कार्ये(?)कारणभावसम्भवात् तदभावश्चासतः प्रागसामर्थ्यात् सामर्थ्यकाले च कार्यनिष्पत्तेस्तत्वतःस्याऽ(स्तत्र तस्याऽ)नुपयोगात्। तस्मात् पौर्वापर्येणैव कार्यकारणभावः कारणसत्तानन्तरं च कार्यस्योत्पादने नष्टात् कारणात् कार्यप्रभा(प्रभवा)नुषङ्गः तथाभ्युपगमे च तृतीये क्षणे कार्योदयः स्यात् (??) यस्मात् प्रथमे क्षणे कार्योदयः स्यात् (??) यस्मात् प्रथमे क्षणे कारणसत्ता द्वितीये तद्विनाशः ततः कार्योत्पत्तिः तदनन्तरं भाव इति। ततो यथैव कारणविनाशस्तत्सत्तापूर्वको न नष्टाद् भवति तथा तत्समानकालं कार्यं कारं(रण)सत्तानन्तर्यान्नष्टादुपजायते। अथ कारणसत्तापूर्वकत्वाद् विनाशो हेतुमां(मान्) प्रसजति, न; नीरूपत्वात् तस्य तत्र हेतुव्यापाराभावात्। तथाहि–स एव हेतुव्यापारेण क्रियते यस्य कृतस्य किञ्चिद् रूपमुपलभ्येत विनाशस्तु ना(नी)रूप इति न तस्य किञ्चित् कर्तव्यम्। दृष्टान्तत्वेन तु विनाशस्योपन्यासो व्यवधायककालासम्भवप्रदर्शनार्थः ततो द्वितीये क्षण(णे) कारणं नष्टं कार्यं चोपजाय(त)मिति कुतस्तयोः सहभावप्रसक्तिः ? तदुक्तम्–

"अनष्टाज्जायते कार्यं हेतुश्चान्येऽपि तत्क्षणम्।
क्षणिकत्वात् स्वभावेन तेन नास्ति सहस्थितिः॥" [ ] इति।

अत्र च अध्ययेना(अध्ययनाऽ)विद्धकर्णोद्द्योतकरादिभिर्यदुक्तम्–"यदि तुलान्तयोर्नामोन्ना-

१ एवं हा० वि०। २ समुत्पन्नः सुसविधिमात्रैव वा० बा०। ३–यती कुतः एव क्षण–वि०। ४ कार्यं स्वकारणेनैककालत्वमनन्तर्यनियमा यदि हि कार्यकारणयोः सहितोत्पत्तिर्भवेत् तदास्यादयो यौगपद्यं च नास्ति सहभाविनोः कार्यकारणभावसंभवात् तदभात्तभावश्चासतः वा० बा०। ५–ष्पत्ते सुत्रतः स्यानुप–वा० बा०। ६ कार्यकारणभावः कारणभावः कारणसत्ता–भा० मा०। ७–णसत्तानान्तरं वा० बा०। ८–त्पादे न–वा० बा०। ९–काल कार्यं वा० बा० मा० विना। १०–रसत्तान–आ०। –रस्तत्तान–हा०।–रसत्तात्तत्त कार्या नष्टा–वा० बा०। ११–नाशो धेतु–बा० वा०। १२–स्य त्तत्र वा० बा० विना। १३–त्र हेतुव्यापार भावा–आ०।–त्र हेतुर्व्यापाराभावा–भा० मा०। १४–तुव्या–वा० बा० विना। १५–प नुप–आ० वि० विना। १६–रूपं इ–वा० बा०। १७ नष्ट का–भां० मा०। १८–जायतति–बा० वा० विना। १९–नष्टा जाय–आ०।–नष्टा ह्राय–वा० बा०। २०–श्चान्येति त–वा० बा०। २१–त्र च अध्ययतेनाविरुद्ध–आ० हा० वि०।–त्र च अध्ययनेनाविरुद्ध–भां० मां०। "उद्द्योतकराऽध्ययनप्रभृतिभि।" "इति अध्ययनाद्यभिमत निरस्तम्॥"—सम्मति० द्वि० का० प्र० गा० टीका। "इत्यध्ययनाऽविद्धकर्णोद्द्योतकरादीनाम्"–शास्त्रवा० स्याद्वाद० पृ० १२२ प्र० पं० ११।

"अत्र अविद्धकर्णोक्तानि विनाशस्य हेतुमत्त्वसाधने प्रमाणानि निर्दिदिक्षुराह—
ननु नैव विनाशोऽय सताकालेऽस्ति वस्तुन। न पूर्वं न चिरात् पश्चाद् वस्तुनोऽनन्तरं त्वसौ॥
एवं च हेतुमानेष युक्तो नियतकालत। कादाचित्कत्वयोगो हि निरपेक्षे निराकृत॥
वस्त्वनन्तरभावाच्च हेतुमानेव युज्यते। अमूला भावतश्चापि यथैवान्यक्षणो मत"॥

तत्त्वस० पञ्जि० पृ० १३६ पं० ७ तथा तत्त्वस० का० ३६७–३६९ पृ० १३६।

"उद्द्योतकरोक्तामपि युक्तिमाह—
अहेतुकत्वात् क्रियायमसन् वन्ध्यासुतादिवत्। अथवाऽऽकाशवन्नित्यो न प्रकारान्तर यत॥
असत्त्वे सर्वभावाना नित्यत्व स्यादनाशत। सर्वसंस्कारनाशित्वप्रलयश्चाऽनिमित्तक॥
नित्यत्वेऽपि सहस्थानं विनाशेनाऽविरोधत। अजातस्य च नाशोक्तिर्नैव युक्त्यनुपातिनी"॥

तत्त्वस० पञ्जि० पृ० १३६ पं० २७ तथा तत्त्वसं० का० ३७०–३७२ पृ० १३६–१३७।

२२ तुलान्तयो–आ० विना। "इति सिद्ध कार्यकारणभाव क्षणिकेष्वपि नाशोत्पादयोरेककालत्वात् तुलान्तयोरुन्नमनाऽवनमनवदिति चेत् अथ मन्यसे कार्यकारणभाव क्षणिकेष्वपि सम्भवतीति कारणविनाशसमकालं कार्यभावात् यदा कारणं विनश्यति तदा कार्यमुत्पद्यते विनश्यच्च कारणमस्ति कारणविनाशेन अभिन्नकाल कार्योत्पाद यथा तुलान्तयोर्नामोन्नामाविति"—न्यायवा० पृ० ४०९ पं० १६–२१।

"न हि तयोर्भिन्न कार्यकारणभाव प्रतिबन्ध समसमयत्वात् ;
नाशोत्पादौ समं यद्वद् नामोन्नामौ तुलान्तयो।"—अष्टसह० पृ० १९९ पं० १३।

"पूर्वक्षणो विनश्यंस्तु उत्तरक्षणमुत्पादयिष्यति तुलान्तयोर्नामोन्नामवत् इति चेत् एवं तर्हि क्षणयोः स्पष्टैवैककालता आश्रिता"—सूत्रकृ० टी० श्रु० १ अ० १ पृ० २७ प्र० पं० १३।

"नाशोत्पादौ समं यद्वत् नामोन्नामौ तुलान्तयो"—प्रमेयक० पृ० १४६ प्र० पं० १४।

भवत् कार्योत्पत्तिकाल एव कारणविनाशस्तदा कार्यकारणभावो न भवेत् यतः [?? कारणस्य विनाशः कारणोत्पाद एव नाशः??] इति वचनात् एवं च कारणेन सह कार्यमुत्पन्नमिति प्राप्तम्। यदि च स एव नाशः प्रथमेऽपि क्षणे न सत्ता भावस्य स्यात् विनाशात् तदैव लोके च भावनिवृत्तिर्विनाशः प्रतीतः न भाव एव, सर्वकालं च विनाशसम्भवात् सर्वदा भावस्य सत्त्वं स्यात्। अथ कारणोत्पादात् कारणवि(?)नाशो भिन्नस्तदा कृतकत्वस्वभावत्वमनित्यत्वस्य न भवे(वेत्) व्यतिरिक्ते च नाशे समुत्पन्ने न भावस्य निवृत्तिरिति कथं क्षणिकत्वम्" [ ] इति, तन्निरस्तम्। यतो द्विविधो विनाशः—सांव्यवहार्यः तात्त्विकश्च। भावनिवृत्तिरूपः प्रथमः, भावरूपश्च द्वितीयः। ततो(?)त्पन्नो भावः कार्यं करोति, कार्यकाले च कारणनिवृत्तिरूपो विनाशो लोकप्रतीत एव, नायं भावस्वभावं इष्यते, नापि कारणोत्पादादभिन्नो वा नीरूपत्वात्। भेदाभेदप्रतिषेध एव केवलस्य क्रियते। उक्तं च—

"भावे ह्येक(प) विकल्पः स्याद्विधेव(र्वै)स्तु(स्त्व)नुरोध(धतः)।" [ ] इति

न व्यतिरिक्ते नाशे जाते क्षणरूपस्य भावस्यानिवृत्तिरित्यपास्तम्। यतश्च द्वितीयक्षणोत्पत्तिकाल एव प्रथमक्षणनिवृत्तिः तेनैकक्षणस्थायी भावो 'विनाश'शब्देनोच्यते, अयं च भावरूपत्वात् साधनस्वभाव एव विनाशः कार्योत्पत्तिकाले च निवर्त्तेत इति कार्यभिन्नकालभावी। न च सर्वकालमस्य सद्भावः भावस्यासत्त्वात्, यद् वा विनश्वरोऽयं भावः 'विनाशोऽस्य' इति द्वाभ्यां धर्मि-धर्मवाचकाभ्यां अविनाशिव्यावृत्तस्यैवैकस्य भावस्य भेदान्तरप्रतिक्षेपाभ्यामभिधानाद् भाव एव नाश उच्यत इति। यत् पुनरिदमभिहितम् 'विधिरूपेण क्षणिकताऽत्र साधयितुं प्रस्तुतेति प्रतिषेधसाधिकाया अनुपलब्धेरिहानधिकार इति, तत् लिङ्गव्यापारविषयानभिज्ञा(ज्ञ)ताख्यापनम्, यतो न लिङ्गं विधिमुखेन किञ्चित् प्रवर्त्तते सर्वस्य समारोपव्यवच्छेदसाधकत्वेनैव व्यापारादिति कार्य-स्वभावहेत्वोरपि नानुपलब्धिरूपताव्यतिक्रमः तेन परमार्थतः अनुपलब्धिरेवैको हेतुरिति सुगतसुताभ्युपगतः (मः)।

---

१ एव एव नाशः वा० वा०। एव च नाशः वि०। २ प्राप्त यदि च प्राप्त एव नाशः आ० विना। ३-वृत्तिविना-आ० विना। ४ प्रतीतो भाव-वा० वा० विना। ५-स्य सत्त्वं भां० मा०।-स्य सत्व स्या-आ० हा० वि०।

६ "तदत्र कतमं नाशं परे पर्यनुयुञ्जते। किं क्षणस्थितिधर्माणं भावमेव तथोदितम्॥

अथ भावस्वरूपस्य निवृत्तिं ध्वंससंज्ञिताम्। पूर्वपर्यु(र्य)नुयोगे हि नैव किञ्चिद् विरुध्यते॥

द्विविधो हि विनाशो विधेः प्रतिषेधलक्षण XXXXX यद्वा भावस्वभावप्रच्युतिलक्षणप्रध्वंसापरनामा विनशनं विनाश इति"—तत्त्वसं० का० ३७३-३७४ तथा तत्त्वसं० पञ्जि० पृ० १३७ पं० २२।

"अयं भावः-द्विविधो ह्यस्माकं विनाशः सांव्यवहार्यः तात्त्विकश्च। आद्यो भावनिवृत्तिरूपः। द्वितीयश्च भावरूपः। तत्र कार्यकाले कारणनिवृत्तिकल्पे आद्यमेव नाशमवलम्बते। वस्तुव्यवस्थापकस्त्वाद्य एव। एतेन 'कार्योत्पत्तिकाल एव कारणविनाशाभ्युपगमे कारणोत्पादरूपत्वात् तस्य सहभावेन कार्यकारणभावव्यवस्थोत्सीदेत्, कारणोत्पादात् कारणविनाशस्य भिन्नत्वाभ्युपगमे च कृतकत्वस्वभावत्वमनित्यत्वस्य न भवेत्, व्यतिरिक्ते च नाशे समुत्पन्ने न भावस्य निवृत्तिः इति कथं क्षणिकत्वम्"—शास्त्रवा० स्याद्वादक० पृ० १२१ द्वि० पं० ९-पृ० १२२ प्र० पं० १। ७ तात्त्विक एव-वा० वा० विना। ८-थम भा-वा० वा० विना। ९ भावः भावरूप इति ततोत्पत्तो भावः वा० वा०। १०-वस्वभाव इ-वा० वा०। ११ भावः ह्ये-वा० वा०। श्लोकोऽयं धर्मकीर्तिसूरेर्ज्ञायते। तथाहि—

"एतेनैतत् प्रतिक्षिप्तं यदुक्तं न्यायमानिना—न तत्र किञ्चिद् भवति न भवत्येव केवलम्" ॥ ३२ ॥

"भावे ह्येष विकल्पः स्यात् विधेर्वस्त्वनुरोधतः। न भावो भवतीत्युक्तमभावो भवतीत्यपि" ॥ ३३ ॥

-शास्त्रवा० स्त० ४ पृ० १२७।

"न्यायमानिना तर्कावलिप्तेन धर्मकीर्तिना"—शास्त्रवा०स्याद्वादक० पृ० १२७ द्वि० पं० ५।

"न तस्य किञ्चिद् भवति न भवत्येव केवलम्"—आप्तमीमां० प० ३ श्लो० ५३ अष्टश० पृ० २८ पं० ३०। अष्टस० पृ० २०० पं० १३। १२ जायतेऽक्ष-वा० वा०। १३ द्वितीयक्षणोत्पत्तिस्तेनैकक्षणनिवृत्तिऽभावोविनाशशब्देनोच्येत वा० वा०। १४ च निवर्त्ते-वा० वा०। १५ कार्यं भि-वा० वा०। १६ भाव वि-आ०। १७-त्तस्य चैकस्य वा० वा० विना। १८ पृ० २१८ पं० २०। १९ न लिङ्ग विधिमुखेन भां० मां० आ०। न लिङ्ग वै मुख्येन वा० वा०।

यदप्यभ्यधायि-'प्रत्यभिज्ञाप्रत्यक्षावसितं भावानामक्षणिकत्वमिति क्षणध्वंसितापरिकल्पनमयुक्तम्' इति, तदप्यसङ्गतम्; तस्याः प्रामाण्यासिद्धेः। तथाहि-प्रमाणस्येदं लक्षणं परेणाभ्यधायि-'तत्राऽपूर्वार्थविज्ञानम्' इत्यादि। न च बाधकवर्जितत्वं अस्याः संभवति प्राक्प्रतिपादितानुमानबाध्यत्वात्। अथ तया बाधितत्वादनुमानस्य कथं बाधकत्वम्? असदेतत्; अनिश्चितप्रामाण्याया अस्या बाधकत्वानुपपत्तेः। न चेतरेतराश्रयत्वं दोषः यतो नानुमानस्य प्रामाण्यं प्रत्यभिज्ञाऽप्रामाण्याश्रितम् अपि तु स्वसाध्यप्रतिबन्ध्या; स च (बन्धात्, स च) विपर्यये बाधकप्रमाणबलान्निश्चित इति कथमितरेतराश्रयत्वलक्षणो दोषः? न चानुमानैविरोधमनुभवन्त्यपि प्रत्यभिज्ञा प्रमाणम् अन्यथा आकारसाम्यदेवत्व(स्यादेकत्व)मधिगच्छन्ती नीलेतरकुसुमसर्पादिवस्तुनः प्रमाणं भवेत् यतो नात्रापि कुसुमादिकार्यदर्शनमनुमीयमानो भेद(?)प्रत्यक्षप्रतीततामनुभवति। न चानुमानस्यात्र बाधकत्वं न इतरत्र प्रमाणावगतसाध्यप्रतिबिम्ब(बन्ध)पक्षधर्मतात्मकतल्लक्षणसंज्ञिनोऽनुमानस्य प्रत्यभिज्ञा अन्यद्वा तत्प्र(तत्प्र)माणान्तरं बाधकं संभवति विरोधात्। तथाहि-स्वसाध्यप्रतिबन्धे हि सति हेतुः स्वसाध्ये सत्येव तस्मिन् धर्मिणि भवति, बाधा तु तदभावनिमित्तैव कथं न विरोधः? प्रत्यक्षादिकं च बाधकं तत्र धर्मिणि साध्याभावमवबोधयति स्वसाध्याविनाभूतश्च हेतुस्तत्र प्रवर्तमानः स्वसाध्यसद्भावमिति भावानामस्वास्थ्यं भवेत्। अनुमानाप्रामाण्यप्रसङ्गश्चैवं स्यात् तुल्यलक्षणे ह्येकत्र बाधकसद्भावो दृष्ट इति। अदृष्टबाधकेऽपि तदाशङ्का न निवर्तते(तेऽ)विशेषात्। नहि दृष्टप्रतियोगिनः प्रागितरेण कश्चिद् विशेषो लक्ष्यते यतो न संभवद्बाधकानामपि सर्वदा तदुपलब्धिः सातिशयप्रज्ञानां तु कदाचिद् बाधकोपलब्धिर्भविष्यतीति तन्निश्चयो(?)बाधकाभावाऽभावयोरत्यनिश्चितत्वल्लक्षणत्वादनुमानं न किञ्चिदपि प्रमाणं स्यात्। कुतश्चाध्यक्षज्ञानमप्रमाणम्? नानुमानतः नहि प्रत्यक्षाऽनुमानयोः प्रमाणरूपतायां विशेषः-प्रत्यक्षेऽप्यर्थाव्यभिचारा(रः) प्रामाण्यनिबन्धनम् स च तस्मादात्मलाभः[?? अन्यतो भवतोऽभवतो वा भवतः तदा व्यभिचारनियमाभावात् स पा(चा)र्थात्मलाभः साक्षात् ??]व्यवधानं तथाऽनुमानेऽपि तुल्यः। यदि प्रत्यक्षबाधान(म)न्तरेण प्रत्यभिज्ञानस्याप्रामाण्यं नाभ्युपगम्यते तदा वक्तव्यं किमिति शालिबीजमेव शाल्यङ्कुरजनकं (कं न) कोद्रवबीजम्? अथ शालिबीजभावे तदङ्कुरभावमवगच्छताऽध्यक्षेण तस्यैव तज्जनकत्वव्यवस्थापनाच्च कोद्रवबीजस्य कोद्रवबीजभावे[?? शाल्यङ्कुरविविक्तदेशप्रतिभासवतोऽध्यक्षेण तस्याजनकत्वव्यवस्थापनाच्च। नन्वेवमन्वयव्यतिरेकानुविधायि तत्कालकार्यमवगच्छद् अध्यक्षं कस्यचिद् वस्तुनः तदा तज्जननस्वभावतानुत्तरकालभाविनस्तत्कार्यस्य तदानीं तस्याजननस्वभावतां च किमिति न प्रत्येति तथा चोत्तरकाल(लभा)विकार्यजननसमये प्रत्यभिज्ञाज्ञानं यदा 'स एवायम्' इति प्रत्येति तदा कथं प्रत्यक्षेण बाध्यते? यतः 'अयम्' इत्युल्लेखवत् पुरोवस्थितवत्का(तत्का)लकार्यजनकं वस्तुनः परामृशति 'स एव' इत्युल्लेखवच्च प्राक्तनम् तदजनकश्च भावस्तस्य संस्पृशति तत् कथं पूर्वापरकालभावि कार्यजनकस्वभावव्यवस्थापकाऽक्षतप्रत्ययक्रान्ता बाधां प्रत्यभिज्ञाज्ञानमनुभवति? तथा, 'स एवायम्' यः प्रागेव तत्कालकार्याजनकस्वभावोऽध्यक्षेण व्यवस्थापितः स यदि न तर्ह्ययं यो जनकः स्वभावतयेदानीं परामृष्टः अथायं जनकस्वभावो विरुद्धरूपभाविभ्रतां द्विचन्द्रादिप्रत्ययानामिव तत्त्वव्यवस्थापकत्वाऽसंभवादिति स्वप्रतीत्यावबाध्यतेयप्रत्यभिज्ञा अतो 'बाधावर्जि(र्जित)त्वम्' अप्यस्या

---

१ पृ० ११८ पं० २३। २ तत्र पू-वा० बा० विना। पृ० ११८ पं० २५। ३-ज्ञाऽप्रमा-वा० बा०। -ज्ञाःप्रमा-आ०। -ज्ञाप्रामा-हा० वि०। ४ तु अस्वसाध्यप्रतिबन्ध्यस विप-आ०। ५-प्रतिबन्ध्यस्य च विप-हा० वि०। ६-पर्यय वा-वा० बा०। ७-नविरोधाम-वा० बा० विना। ८-भवत्यपि वा० बा०। ९-कारं सा-वा० बा०। १०-तरं कु-वा० बा०। ११-माणं वे-वा० बा० विना। १२-माना मे-वा० बा०। १३-णसंनिनो-वा० बा०। -णसंज्ञितो भां०। १४-न्यद्वा त् प्र-आ० हा० वि० विना। १५-थाहि स्वस्वसाध्य-भा० मां०। १६-स्वास्थ्यं भ-आ० हा० वि०। १७-लब्धः सा-वा० बा० विना। १८-ति न निश्चियो वा० बा०। १९ तदध्य-वा० बा० भा० मा०। २०-धानं नवानु-आ० हा० वि० विना। २१ तत्कार्य-भा० मा०। २२-स्तुन त-वा० बा०। २३-त्कालाका-वा० बा०। २४-नकव-मां० हा० वि०। २५ प्रागमं त-वा० बा०। २६-कश्च भावं तस्य वा० बा०। -कश्च भावस्तस्य भा० मा०। २७-त्यभिज्ञानतानु-वा० बा०। २८ अथेयं वा० बा० विना। २९-भावो न तर्हि स एवेत्यध्यवसीयमानोऽजनस्वभावो विरुद्धरूप-वा० बा०। ३०-पमवि-वा० बा०। ३१-ध्यते प्र-वा० बा०।

असङ्गतम् !!]यथा शुक्तिकायां रजताध्यवसायो दुष्टकारणा(ण)प्रभवत्वेन(नाऽ)प्रमाणं तथा प्रतिक्षणविशरारुषु सदृशापरोत्पत्त्यादिविप्रलम्भहेतोरुपजायमानं प्रत्यभिज्ञानं द(दु)ष्टकारणारब्धत्वादेव(वाऽ)प्रमाणम्। न च प्रत्यभिज्ञानमेव स्वविषयस्य तत्त्वं व्यवस्थापय(यद)दुष्टकारणारब्ध(ब्धत्व)मात्मनो निश्चाप(निश्चाय)यति, इतरेतराश्रयत्वप्रसक्तेः—अदुष्टकारणारब्धत्वात् स्वविषयव्यवस्थापकत्वम् ततश्चादुष्टकारणारब्धत्वमिति कृत्वा। लूनपुनरुदितकेशादिषु चैकत्वाभावेऽप्यस्य दर्शनात् कुतः स्वविषयव्यवस्थापकत्वम्? न चा(च) केशादिप्रत्यभिज्ञानस्यान्यत्वान्नायं दोषः अन्यत्वा(त्रा)पि नियामक(?)मन्तरेण व्यभिचारशङ्काऽनिवृत्तेः। न च यो जनित्वा प्रध्वंसते 'नैतदेवम्' इति स मिथ्याप्रत्ययः वज्रोपलादिप्रत्यभिज्ञानं तु देशान्तरादौ न विपर्येतीत्यवितथम् अनुमानस्यात्रापि विपर्ययव्यवस्थापकस्य प्रतिपादितत्वात्। तन्न अदुष्टकारणारब्धत्वमप्यत्र संभवति। अर्थक्रियार्थीर्हि(र्थी हि) सर्वैः प्रमाणमन्वेषते न व्यसनितयेत्यर्थक्रियासाधनविषयं प्रमाणमित्यभ्युपगन्तव्यम्। न च प्रत्यभिज्ञानविषयेण स्थैर्यमनुभवताऽर्थक्रिया काचित् साध्यत इति तैमिरिकज्ञानवदपूर्वमर्थक्रिया(?) अक्षमं सामान्याद्यधिगच्छदपि न प्रमाणमिति प्रमाणलक्षणाभावान्न प्रत्यभिज्ञाप्रमाणा(?)मात्मध्यक्षं सता नित्येनार्थेन प्रत्यभिज्ञानजनकाभिमतेनेन्द्रियाणां संप्रयोगासिद्धेस्तद्व्यवस्थापकप्रमाणाभावा(वात्)। भावे वा तत एव तत्सिद्धेः व्यर्था प्रत्यभिज्ञा। न च सत्योदकाध्यक्षेष्वप्येतत् समानम्। अर्थक्रियाज्ञानात् तेषां तथाभावसिद्धेः। न च बहिरर्थाभावेऽप्यर्थक्रियाज्ञानस्य भावात् तत्तथात्वसिद्धिः, शून्या(न्य)वाद(दा)पत्तिप्रसङ्गात् तद्व्यतिरेकेणापरस्यार्थव्यवस्थापकस्याभावात्। न चैकत्वे संवादकं प्रमाणं किञ्चित् सिद्धमिति न प्रत्यक्षताऽपि प्रत्यभिज्ञाज्ञानस्येति नातः स्थैर्याधिगतिः।

किञ्च, एकत्वाध्यवसायिन्यपि क्रमोदयमनुभवन्ती प्रत्यभिज्ञा स्वविषयस्य क्रमं सूचयति, नह्यभेदे स्वालम्बनस्य क्रमवत्प्रत्यभिज्ञोदयः संभवति, ततो येन स्वभावेनाद्यं प्रत्यभिज्ञानं तथालम्बनत्वाभिमतः पदार्थो जनयति तेनैव यद्युत्तरकालभावीनि तदाद्यज्ञानकाल एव सर्वेषामुदयप्रसक्तिः सन्निहितकारणत्वात् आद्यज्ञानवत्, अनुदये वा तस्य तानि प्रत्ययजनकत्वमेव। नहि यदा यद् यन्न जनयति तदा तत्र जननस्वभावम् पश्चादपि तत् तत्स्वभावमेव नैव तदापि जनयेत् अथान्येन तदा स्वभावे(व)भेदात् कथं न प्रत्यभिज्ञाविषयस्य भेदा(दः) स्वभावभेदनिबन्धनत्वादर्थभेदस्य? अपि च, सकलसहकारिसन्निधाने येन स्वभावेन तदालम्बनं प्रत्यभिज्ञाज्ञानं जनयति स्व(स) स्वभावस्तस्य तदैवोत्तर(वोत) प्रागप्रा(गप्या)सीत्? यदि तदैव कथं पूर्वस्मादभेदस्तस्य प्रागसतः तदैव सत्ताभ्युपगमात्? अथ अवस्थानां भेदः अवस्थातुश्चाभेदः, न; अवस्थातुरपि तदवस्थाभाविनो जनकाजनकस्वरूपतया भेदस्य न्या(न्या)यप्राप्तत्वात्। न चावस्थावा(वान् अ)वस्थाव्यतिरिक्तोऽस्ति उपलब्धिलक्षणप्राप्तत्वे तस्यानुपलम्भेनासत्त्वात्, अनुपलभ्यस्वभावत्वे च तस्य न प्रत्यभिज्ञाविषयत्वमिति

---

१–कारणत्वमात्म–वा॰ बा॰। २–प्रसक्तेरदुष्टकारणारब्धत्वमात्मनो निश्चयतीतरेतराश्रयत्वप्रसक्तेरदुष्टकारणारब्धत्वात् स्वविषयव्यवस्थापकत्वम् वा॰ बा॰। ३–पकं तत–वा॰ बा॰। ४–रब्धमिति हा॰ वि॰। ५ न वा के–मा॰ मा॰ विना। ६–न्यत्वो पि आ॰ वि॰। ७–शङ्काऽ–आ॰ विना। ८ च या ज–मा॰ मा॰।च जो ज–वा॰ बा॰। ९–लते नै–मा॰ मा॰। १०–ज्ञा तु दे–वा॰ बा॰ विना। ११–तत्वात्वत्र आ॰।–तत्वाच्चत्र हा॰ वि॰। १२–यार्थी तर्हि वा॰ बा॰। १३ सर्वे प्र–आ॰। १४–याक्रिया सा–वा॰ बा॰। १५–णमित्युप–वा॰ बा॰। १६–पयण वा॰ बा॰। १७ न प्रमाणलक्षणा–मा॰ मा॰। १८–ज्ञाप्रमाणमात्मध्यक्षं मा॰ मा॰।–ज्ञाप्रमाणमानात्यद्यध्यक्षं वा॰ बा॰। १९–ध्यक्षं साता आ॰। २०–भावे वा मा॰ मा॰। २१–वादाप्यत्ति–मा॰ मा॰।–वादाप्यपत्ति–हा॰ वि॰।–वाप्यत्ति–वा॰ बा॰। २२ न प्रत्यभिज्ञा–मा॰ मा॰। २३–नस्येति मात स्थै–वा॰ बा॰ विना। २४–गति वा॰ बा॰ विना। २५–त्वावासातात्यपि वा॰ बा॰ २६ तथालम्ब–वा॰ बा॰। २७–दार्थो ज–आ॰ विना। २८–भावीति त–मा॰। २९–दाद्यतनज्ञान–वा॰ बा॰ विना। ३०–दयो वा वा॰ बा॰ विना। अत्र 'अनुदये वा तस्य न प्रत्ययजनकत्वमेव' इति पाठः स्यात्। ३१–त्ययः ज–आ॰। ३२ यदाद्यं न जन–वा॰ बा॰ विना। ३३ जनयति स्वभावं पश्चा–वा॰ बा॰। ३४–च प– वा॰ बा॰ मा॰ विना। ३५–भाव नै–आ॰। ३६ स्वभेदात् वा॰ बा॰। ३७–स्य भेदा निबन्धत्वा–वा॰ बा॰। ३८ तदेवो–वा॰ बा॰ विना। ३९ सत्त्वा–आ॰। ४०–भाविनो जनकस्व–वा॰ बा॰। ४१ नायं प्रा–वा॰ बा॰। ४२ न चावस्थाव्यति–वा॰ बा॰। ४३–व्यतिरिक्ताऽ–वा॰ बा॰।

नामेदसिद्धिः। सहकारिप्रत्ययोपजनितस्य वा(चा)तिशयस्यालम्बनाद् (नाद् व्यतिरेके) व्यतिरेकपक्षे-भावी दोषो दुर्निवार इत्युक्तं प्राक्। अथ प्रागपि स स्वभाव आसीत् तदोत्तरकालभावीनि प्रत्यभिज्ञाना(भिज्ञा)कार्याणि प्रागेवोदस्तवति(वन्ति) स्युरिति क्रमवता प्रत्यभिज्ञाज्ञानेन स्वसंवेदनेनोपलक्षितेनाभिन्नत्वेनोपलक्षितस्यापि व्या(बाह्या)लम्बनस्य क्रमः प्रदर्शित एव। अथ दर्शनाविशेषेऽपि प्रत्यभिज्ञाकार्यक्रमानुभवः किमिति सत्यत्वेन व्यवस्थाप्यते न पुनरभिन्नतदालम्बनानुभवतः(भवः) उच्यते, क्रमसंवेदने बाधकाभावादितरत्र तद्विपर्ययात्। यदि ह्यसतो ज्ञानक्रमस्य स्वसंवित्या(त्त्या) विषयीकरणं भवेत् तदा तदभावे स्वसंवित्तेरपि तद्व्यतिरिक्ताया(याः) तत्प्रभावान्न केनचित् कस्यापि विषयीकरणं भवेदिति तत्क्रमानुभवः सत्यः बाह्यालम्बनाभेदानुभवस्तु लूनपुनर्जातकेशादिष्विव बाधितत्वादसत्यः। यथा चानुसन्धानप्रत्यया बहिरेकत्वाद्यालम्बनाभावेऽप्यान्तरमेव(मिका)कारं बहिर्वद् अवभासमानाः प्रवर्त्तन्ते तथाऽन्यत्र प्रतिपादितम्।

यत् पुनः परैरुच्यते–आलम्बनैकत्वाध्यवसायि प्रत्यभिज्ञाकार्यक्रमदर्शनं सहकारिप्रत्ययैरनाधेयातिशयतामालम्बनस्य बाधनो(धते?) कार्यस्यानुत्पादयौगपद्याभावान्न पुनरभेदम् भेदावभासिनोऽनुभवस्याभावादिति, तदप्यसङ्गतमेव, यतो यद्यालम्बनस्याभेदो न बाध्यते तर्हि सहकारिसन्निधावप्यप्रतीयमानातिशयानां घञ्जोपलादीनां अनाधेयातिशयताऽपि कथं बाध्येत? अथ कार्यानुत्पादयौगपद्याभावान्ना(वात् सा) बाध्यते, नन्वेवमनुपलभ्यमानोऽपि भेदस्तस्यामवस्थायां अतिशयवत् किं नाभ्युपगम्यते? यतोऽनतिशयानुभवस्याप्यनुमानत एवाऽप्रामाण्यं परोऽभ्युपगतवान् अन्यथा भेदानुभवमनादृत्य कथमतः सातिशयत्वं तस्यामवस्थायामभिमन्येत? तथा, यद्यालम्बने भेदोऽप्यङ्गीक्रियते तदा को दोषो विशेषाभावादिति क्रमेत(व)त्प्रत्यभिज्ञालक्षणकार्यदर्शनात् तदालम्बनस्यापि क्रमः सिद्धः। तदुक्तम्–

"नाक्रमात् क्रमिणो भावो नाप्यपेक्षा विशेषिणः।
क्रमाद् भवन्ती धीक्षे(र्क्ष)यात् क्रमं सत्या(मं तस्या)ऽपि सत्स(सेत्स्य)ति"[ ]इति।

तदेवं न बहिरवस्थितैकार्थसम्प्रयोगेणेन्द्रियेण जन्यते प्रत्यभिज्ञा तदा(द)भावान्न प्रत्यक्षं(क्षं?) नापि प्रमाणमिति स्थितम्। तथा च 'नहि स्मरणतो यत्' इत्यादि वचनं सिद्धसाधनमेव, यतो यदेवंभूतं तद् भैव(वि)त् प्रत्यक्षम् नैत्वेवं प्रत्यभिज्ञानमिति का नः क्षतिः? यतः पूर्वानुभूतधर्मारोपणाद् विना 'श (स) एवायम्' इति ज्ञानं नोपजायते तच्चाक्षजे प्रत्ययेऽसंभवि।

यदप्युक्तम् 'देशादिभिन्नं सामान्याद्यालम्बनम्' इति, तदप्यसङ्गतम्, सामान्यादेरभिन्नस्य तद्विषयस्याभावात् भावेऽप्यनेकप्रमाणगोचरत्वेन तत्र प्रवर्त्तमानस्य प्रत्यभिज्ञानस्याऽनधिगतार्थाधिगन्तृत्वायोगात् भिन्नाभिन्नालम्बनत्वेऽपि च प्रत्यभिज्ञानस्य न प्रामाण्यम् अपूर्वप्रमेयाभावात्। नहि देशादयस्तत्र प्रत्यभिज्ञानांते(ज्ञायन्ते) प्रागदर्शनात् तेषाम् पूर्वोपलब्धे तु सामान्यादौ न प्रमेयाधिक्यम्। न च पूर्वप्रसिद्धमेवाग्निसामान्यं देशादिविशिष्टतयानुमानस्याधिगच्छति(गच्छतः) प्रमेयातिरेकानु(कात्) यथा न प्रामाण्यव्याहतिस्तथा प्रागुपलब्धमेव सामान्यादिदेशादितिविशिष्ट(देशादिविशिष्ट)तया प्रतिपद्यमानस्याप्यपूर्वप्रमेयसङ्गतेन प्रामाण्यक्षतिरिति वक्तव्यम्, द्वितीयप्रत्यक्षत

---

१–क्षमवो दो–आ०। २–सीत् तनोत्त–वा० बा०। ३ प्रतिज्ञा–वा० बा०। ४–लक्ष्यते–वा० बा०। ५–भतः वा० बा०। ६–स्तु नपुन–भा० मा० हा० वि०। ७–था वा–वा० बा०। ८–रबहिर्वेदनासमानाः वा० बा०। ९–स्य बाधतो का–वा० बा०।–स्य धाना का–आ०। १० कार्यस्य नु–वा० बा०। ११ बाधते आ०। १२–प्य वर्तियमा–वा० बा०। १३–यानापि भा० मा०। १४–शयेना–वा० बा० विना। १५–स्याया नति–वा० बा०। १६ यतोऽयनेति–भा० मा०। १७–नुभाव–वा० बा० मा० विना। १८–थाऽभे–वा० बा०। १९–द्यालम्बल भे–वा० बा०। २०–वादित क्रम–वि० विना। २१–मत्प्र–वा० बा०। २२ भवं धी क्षेयात् क्रमं तस्यापि सत्सतीति वा० बा० विना। २३–पि सेत्स–वि०। २४–कार्थसप्र–आ० वि० विना। २५–क्ष नापि वा० बा०। २६ च। ते हि वा० बा० विना। २७ पृ० ३१९ पं० ४। २८ भव प्र–वा० बा०। २९ नन्वेवं वा० बा० आ०। ३० संभवति वा० बा०। संभववि आ०। ३१ पृ० ३१९ पं० ११। ३२–शादिभिन्न सा–वा० बा०। ३३–च्छति: वा० बा०। ३४–माण्यान्या–भा० मा०। ३५–था प्रागुप–वा० बा०। ३६–शादिविविशि–वा० बा०। ३७–ण्यक्षति–वा० बा० आ० विना।

एव तत्[1]सिद्धिः प्रत्यभिज्ञात(न)स्यापूर्वप्रमेयायोगात् । तं[2] व (न च)पश्चादुपल[3]ब्धपूर्वदृष्टार्थभावोऽधिकः प्रत्य[4]क्षानवतः(नवगतः) प्रत्यभिज्ञानेन प्रतीयत इति अपूर्वप्रमेयसद्भावः, यतः पूर्वदृष्टार्थभावो न प्रत्यक्षद्वयगोचरादतिरिक्त इति कथं तस्य ततोऽसि[5]द्धिः? व्यतिरेक(के) वा कथं न मिथ्याप्रत्ययः? 'स एव' इत्यभेदोल्लेखवान् अनुस[6]न्धानं व (च) 'योऽयमिदानीमुपलभ्यते प्रागप्येष मया दृष्टः' इति लोकस्य प्रवर्त्तते अतः 'स एवायम्' इति नहि पूर्वदृष्टतामस्मरतः 'स एवायम्' इत्यनुसन्धान[7]संभवः [?? तस्मात् स्मृतिरूपता[8] नातिक्रामति, प्रत्यभिज्ञा[9]नं च यथावस्तुस्वरूपग्राहिणाऽध्यक्षेण तद्व्यतिरिक्ते क्षणक्षयेऽधिगतेऽपि तत् निश्चितम् त[10]न्निश्चितत्वा नानुमितिः प्रमाणम्, तथा[11] च स्वव्यतिरिक्ते एकत्वे दर्शनद्वयगृही[12]तमपि त[13]न्निश्च्या न प्रमाण[14]मभिज्ञाय[15]ते, अनु[16]मितिः साध्याविनाभूतलिङ्गसमुद्भवा दर्शनमा[17]त्रनिबन्धना न भवतीति प्रतिपक्षे[18]ऽप्यंशे समारोप्य व्यवच्छेदं कुर्वाणा प्रमाणम्; न[19]न्वेवं प्रत्यभिज्ञा[20]दर्शनबलात् तदुत्पत्तेः समारोपव्यवच्छेदविषयौ[21] चैवं स्यात् न वस्तुग्राहिणी तथा चाऽस्याः कुतः प्रत्यक्षता स्वतन्त्रायाः प्रामाण्यं वेति । यदपि 'प्रमेयातिरेकाभावेऽपि सन्देहाऽपाकरणात् प्रमा[22]ण(णं) प्रत्यभिज्ञा' इत्यभ्यधा[23]यि, तदप्यसङ्गतम्; स्मृ[24]तेरपि 'किं मया दृष्टं उत न' इति संशयव्यवच्छेदेन 'दृष्टम्' इत्युपजायमानायाः प्रमाणताप्रसक्तः(क्तेः) । आलोचनाज्ञानान्तरं विकल्प[25]कप्रत्यक्षाभ्युपगमा[26]त् कालान्तरं सविकल्पकप्रत्यक्षाभ्युपगमात् कालान्तरादिभावोऽपि तत ए[27]व निश्चित इति कुतो भवदभिप्रायेण स[28]न्देहं(हः)? नहि निश्चयविषयीकृतमनिश्चितं नाम, न च कालान्तरादौ सद्भावः ततो व्यतिरिक्तः अन्यत्वप्रसङ्गात् इति प्रमेयाऽऽधिक्या(क्य)मेव प्रामाण्यनिबन्धनमभिधातुमु(धातुं यु)क्तम् अन्यथा निष्पा[29]दितक्रिये कर्मविशेषाधायि कथं साधनं स्यात्? ??]

यत् तु 'इदानीन्तनमस्तित्वं नहि पूर्वधिया गतम्' इत्यु[30]क्तम्, तद्युक्तमेव इदा[31]नीं(नीन्त)नत्वस्य भेदात् अ[32]न्यथा प्राक्तनवि[33]कल्पबुद्ध्या वस्त्वव्यतिरेकि इदानीन्तन्ना(नीन्तना)स्तित्वस्य कथमग्रहणम्? यदि च सविकल्पकं प्रत्यभिज्ञाप्रत्यक्षमर्थग्राहकमभ्युपगम्यते तदा[34] सर्वात्मनार्थस्य निश्चितत्वात् प्रमाणान्तरप्रवृत्तेवै(वै)यर्थ्यप्रसक्तेरिति वि[35]चारितमन्यत्रेतीह न प्रतन्यते । यैस्तु निर्विकल्पकं प्रत्यभिज्ञाज्ञानं प्रमाणतया अभ्युपगतम् तेषां तदुत्तरकालभाविसविकल्पकाध्यक्षप्रायो घटादिविषयः प्रमेयातिरेकाभावात् कथं प्रमाणतामश्नु[36]वीत? न च प्रमेयातिरेकमन्तरेणापि सन्दिग्ध[37]वस्तुनिश्चयनिबन्धनत्वा(त्वात्) प्रमाणमसौ, निर्विकल्पक-सविकल्पकयोर[38]क्षजप्रत्यययोर्नियतपौर्वापर्ययोरपान्तराले सन्दे-

---

१-तिसद्धि प्र-आ० । २ तञ्च वा० वा० विना । ३-लब्धपू-आ० । ४-क्षाभवतः वा० वा० विना । ५-सिद्धि व्यतिरेक ता कथं वा० वा० विना । ६-न्धान व वा० वा० विना । ७-नसंधान संभ-वा० वा० । ८-तानति-वा० वा० । ९-ज्ञान च भा० मां० आ० हा० ।-ज्ञाने च वा० वा० । १० तन्निश्चत्वा नानु-वा० वा० । ११-था व स्वव्यति-वा० वा० ।-था व स्तुव्यति-भा० मां० । १२-त पि वा० वा० । १३ तन्निश्चा न वि० विना । १४-ण भि-आ० हा० वि० विना । १५-यतो अ-वा० वा० । १६-नुमिति सा-आ० हा० वि० । १७-मानत्रनिबन्ध न भ-भा० ।-मानत्रिनिबन्ध न भ-मां० ।-मात्रनिबन्धन भ-आ० हा० वि० । १८-प्यंशो स-भां० मा० । १९ नत्वेवं प्रत्यभिज्ञानद्-हा० वि० । २०-दर्शनं व-आ० मां० । २१-या वैवं हा० वि० ।-या चैव आ० । २२-माणा प्र-हा० । २३ पृ० ३११ पं० २५ । २४ स्मृतिर-आ० । २५-ल्पकं प्र-वा० वा० । २६-मात् कालान्तरादिभा-वा० वा० । २७ एवं नि-हा० । २८ सन्देह न-वा० वा० ।

२९ "निष्पादितक्रिये चार्थे प्रवृत्तः स्मरणादिवत् । न प्रमाणमिदं युक्तं करणार्थविहानितः" ॥

—तत्त्वसं० का० ४५१ पृ० १५९ ।

३० पृ० ३११ पं० १७ । ३१-दानीन्तनन्त्विस्य वा० वा० ।-दानीनन्त्वस्य आ० ।

"नन्विदानींतनास्तित्वं यदि भिन्नं त्वयेष्यते । पूर्वभावात् तदा भेदस्त्वयैव प्रतिपादितः" ॥

—तत्त्वसं० का० ४५७ पृ० १६० ।

३२ "अनन्यत्वेऽपि सत्त्वस्य कथं पूर्वधियाऽगतम् । तस्यागतौ हि वस्त्वेव नोपलब्धं प्रसज्यते" ॥

—तत्त्वसं० का० ४५८ पृ० १६० ।

३३-कल्पाद्यु-वा० वा० विना । ३४-दा सर्वदात्मनार्थस्य वा० वा० ।-दा सर्वात्मते तदा सर्वात्मनार्थस्य भां० मां० । ३५-चारिताम-आ० विना । ३६-श्नुवते न वा० वा० विना । ३७-ग्धनिवस्तुनिश्चय-भां० मां० हा० वि० ।-ग्धनिश्चनिश्चय-वा० वा० । ३८-क्षप्र-वा० वा० ।

हासंभवात् तदपाकरणाभावोन्न निर्विकल्पकप्रत्यक्षेण[1] समाना[2] [?? प्रत्यभिज्ञानेनैकत्वमवगन्तुं शक्यम् यतोऽर्थसाक्षात्कारि[3] प्रत्यक्षं लोके प्रतीतम् पूर्वापरसंवेदनाऽधिगतभावैकत्व[4]ग्राहकं च प्रत्यभिज्ञानम्[5] तत् कत[6](थ)मध्यक्षस्य स्वरूपम्? तथाहि—न तावत् प्रथमसंविदस्तत्त्व[7]ग्रहण[8]संभवः, तत्संभवे[9] हि भाविसमयादि[10]ग्रहणमिति तदैव[11] स्तम्भादेरुदयमध्यास्ते(स्त)मयादिप्रतीतिप्रसक्तिः। न च भावि[12]समय-वे(दे)श-दशादश(र्श)नादि न गृह(ह्य)ते ते तत्सम्बन्धं[13](न्धि) तु रूपं पूर्वदर्शने प्रतिभात्येव, भाविकालाद्यग्रहे तत्सम्बन्धिरूपस्याप्य[14]ग्रहाद् यदेव हि तद्देशाद्यनुव्यक्तं[15] रूपं तत्र प्रतिभातीति न तद्दर्शनाऽवसेयम्, यदि तु भाविकालाद्यग्रहेऽपि तत्संबन्धिरूपग्रहस्तथासति सर्वे भावाः समस्तकालदर्शनसंबन्धिन आद्यदर्शनाऽवसेयाः स्युः, एवं च सति सर्वे नित्या भवेयुः अ[16](अथ) नैषां प्रथमदर्शनं(नि) सर्वकालस्थायिता[17] प्रतिभातीति नैते तथाऽभ्युपेयन्ते तर्हि तत्र भाविदृगादिपरिष्वक्तता[18]ऽपि न प्रतिभातीति साऽपि न तत्र सती। न च तस्यैवोत्तरकालं[19] प्रतीतेः भाविविज्ञानग्राह्यताद्यतः तस्यैवोपलब्धिः किं पूर्वदृशा, उत उत्तरकालाभ[20](कालभा)विन्या? यदि पूर्वदृशा[21] तदा सोत्तरकालमसती[22] कथं प्रतिपद्यते[23]? नह्यसद् ग्राहकम् अतिप्रसङ्गात्। यदापि सा सती आसीत् तदा न पश्चाद् दर्शनादि संभवतीति[24] न तत्प्रतिभासिरूपग्रहः[25] प्राक्[26]। अथोत्तरकालभाविनी[27] दृक् तस्योपलब्धि(ब्धिर)युक्तमेतत्, यतो द्वितीयदृगपि स्वप्रतिभासिनमेव पदार्थात्मानमवभासयतु[28] न पुनस्तत्त्वम्। यतस्तत्त्वं दृश्यमानस्याऽर्थस्य पूर्वदेशादिपरिगतत्वम् (गतत्वम् दृष्टवा) वा? ??]

न तावदाद्यः पक्षः, पूर्वदेशादीनामसन्निधानेनाप्रतिभासेन[29](ने) तत्सम्बद्धस्यापि रूपस्याग्रहणात्[30] प्रत्यक्षेण न[31] चाऽसन्निहिता देशादयः प्रतिभान्ति दर्शनस्य निर्विषयत्व[32]प्रसङ्गात्, सकलातीतभावपरम्परा[33]परिच्छेदप्रसक्तेश्च कालत्रयप्रदर्शि प्रत्यक्षं भवेत्। न च तथाऽभ्युपगन्तुं युक्तम्, अतीतादौ विशदप्रतिभासाभावात्, तमन्तरेण च प्रत्यक्षेणाग्रहणात्[34], न च पूर्वदेशादीनां तदा[35] सन्निधानम्, सन्निधौ वा तद्दर्शने प्रतिभासनात् पूर्वरूपतात्यागः वर्त्तमानताप्राप्तेः—नहि तद्दर्शनप्रतिभासनमन्तरेणान्या वर्त्तमानता नीलादीनामपि। तथापि पूर्वरूपत्वे वर्त्तमानव्यवहारोच्छेदप्रसक्तिः[36]। न च पूर्वदेशादीनामप्रतिभासे तत्सम्बद्ध[37]रूपप्रतिभासः प्रत्यक्षतः संभवति, अन्यथा सर्वदेश-काल-दशापरिष्वक्तभावावगमात् सर्व एव व्यापिनो नित्याः सर्वाकारस्वभावाः[38] प्रसजन्ति, न च नियतदेशादिसंसर्गितया तेषां प्रतीतेर्नायं दोषः, पूर्वदेशादिसंसर्गितया[39] सम्प्रति दर्शने[40]ऽप्रतिभासमानवपुषस्तथात्वाभावप्रसक्तेः। तन्न पूर्वदेशादि[41]मत्त्वं[42] दृश्यमानस्य तत्त्वम्।

अथ दृष्टता दृश्यमानस्य[43] तत्त्वम् स्या(सा)पि किं सम्प्रति दर्शने प्रतिभातता[44], आहोस्वित् पूर्व-

---

१-वाच्च विक-वा० बा०।-वाचाविक-आ०। २ सहमाना-वा० बा०। ३-र्थसाहात्कारि हा० वि०।-र्थसहकारि आ०। ४-कत्वाग्रा-भा० मां०। ५-ज्ञातम् आ० विना। ६ क त-भा० मा०। ७-दस्तत्त्वग्र-हा०।-दस्त्वत्त्वग्र-आ०।-दकस्तत्त्वग्र-वि०। ८-हणं स-वा० बा० भां० मा०। ९-वस्तत्संभवस्तत्संभवे हि वा० बा०। १०-मयाविग्र-भा० बा०। ११ तदैव संभदेरुदयमस्त्वास्ते वा० भा०। १२ भाविसमयदेशदशावशनादि न गृति तेन तत्स-वा० बा०। भाविसमयदेशनादि न गृ ति ते तत्स-भा० मा०। भाविसमयदेशनादि न गृहते तत्स-हा० वि०। १३-म्बन्धे तु आ०। १४-स्याप्याग्र-वा० बा० विना। १५-नु व्यक्तं-भा० मा०।-नुपव्यक्तं आ० हा० वि०। अत्र 'तद्देशाद्यनुव्यक्तं रूपं तत्र प्रतिभाति' इति पाठ समाव्यते। १६ अन्येषां वा० बा० विना। १७-लस्थायिता वा० बा०। १८-परिव्यक्त-आ०। १९-ह्यतत्तस्यै-हा० वि०। अत्र 'प्राह्यता स्यात् यत' इति पाठ समाव्य। २०-लाभिवि-वा० बा०। २१-शा स्तदा भा० मा० आ०।-शास्तद्रा हा० वि०। २२-त्तरं का-वा० बा० विना। २३ प्रतिपाद्य-वा० बा० विना। २४-वतीति न त तत्प्र-आ० हा०।-वतीति न न त तत्प्र-भा० मा०। २५-पग्राह्य प्रा-वा० बा०। २६ प्राक्। अथोत्त-हा०। प्रागेवोत्त-आ०। २७-भाविनी व्यक्तु तस्यो-वा० बा० विना। २८-तु पु-आ०। २९-सन तत्सम्बन्धस्या-आ० वि०।-सनन तत्सम्बन्धस्या-हा०। ३०-हणं प्र-वा० बा०। ३१ न वा-भा० विना। ३२-यप्र-वा० बा०। ३३-म्पराच्छेद-वा० बा० विना। ३४-णाग्रहणस्य च आ०। ३५-दासन्निधौ वा वा० बा०। ३६-सक्तेः आ०। ३७-त्सम्बन्धरू-आ०। ३८-कारस्वभावाः प्रस-आ०।-कारश्च भावः प्रजन्ति वा० बा०। ३९-या तम्प्रति वा० बा०। या सं सम्प्रति आ०। ४० दर्शने प्र-वा० बा० विना। ४१ पूर्वादे-आ० विना। ४२-शातिम-वा० बा०। ४३-नस्या सा त्वस्यापि हा० वि०।-नस्य सा त्वस्यापि आ०।-नस्य स त्वस्यापि भा० मां०। ४४ भातिता वा० बा० विना।

दृशि? यद्याद्यः पक्षः तदा [1]वर्त्तमानतैव न पूर्वापर[2]दृगव(गवग)तैकत्वम्। अथ द्वितीयः तदा पूर्वदर्शनमपेतत्वाद् असत् कथं वर्त्तमानदर्शने प्रतिभाति? तदप्रतिभासे च तद्ग्रा[3]ह्यतापि प्रच्युतत्वाद् न प्रतिभाति, तद्दृग्ग्राह्यं तु रूपमधुना सन्निहितत्वाद् वर्त्तमानदृगधिगम्यं [4]भविष्यति पूर्वदर्शनस्यापरिच्छेदे तदधिगम्यस्यापि रूपस्याधिगमासंभवात्। यतो न वर्त्तमानं दर्शनं [5]पूर्वदृशमगृह्णत् तदधिगम्यमधिगन्तुं क्षमम् तद्दिशा(तद्दृशो) ग्राह्यमधिग[6]च्छतु पूर्वदृग्ग्राह्यतां तु कथमधिगच्छेत्? [7]यदि तु पूर्व[8]दृगम(गन)वगमेऽपि तद्ग्राह्यता प्रतीयते तथासति सका(क)लातीतदृग्ग्राह्यताऽपि प्रतीयताम्। [9]न च पूर्वदृष्टता नाभाति पूर्वदृष्टरूपं ना(चा)भातीति पूर्वदृष्टताऽप्रतीतौ पूर्वदृष्टरूपाऽप्रतिपत्तेर्नहि नीलताप्र(ताऽप्र)तिपत्तौ [10]नीलोऽर्थोऽधिगतो भवति। स्ववेद्यत[11]या च प्रतिभासमानः स्ववेद्य एव ना[12]न्यवेद्यः तत्राप्रतिभासमानरूपाभ्युपगमेऽतिप्रसङ्गात् सर्वस्य सर्वात्मकतापत्तेः। न च पूर्व[13]दृशाऽपो(दृशोऽपा)ये तत्कर्मता अर्थस्य प्रच्युतेति न [14]भाति तद्गोचरः सर्वात्मना भाव्ये(व्ये)व [15]तदपाये तदवगतत्वेनाऽप्रतिभासनाद्य(नाद)न्यथातिप्रसङ्ग इत्युक्तेः। यदि च प्राग्द[16]र्शनगोच[17]रोऽर्थो वर्त्तमानदृशि प्रतिभाति पूर्वदृग्गोचरसकलपदार्थप्रतिभासप्रसङ्गः। न च भिन्नं पूर्वदृग[18]वगतं नावभाति अभिन्नं तु तत्प्रतिभासवि[19]पर्ययोऽवभासत एव नीलादेर्भि[20]न्नस्यापि वर्त्तमानदर्शनप्रतिभासनात् पूर्वदृष्टत्वादेव तस्य न तत्र प्रतिभासः, [21]तच्चाभिन्नेऽपि समानम् इति कुतस्तस्य प्रतिभासः? [22]न चाभिन्नस्य पूर्वदृग्गोचरस्य सन्निहितत्वा(त्वात्) प्रतिभासः नेतरस्य विपर्ययात् तत्सन्निधेरे[23]वासिद्धेः। न च सम्प्रति दर्शनात् तत्सन्निधिसिद्धिः, यतः किं तत् तस्य दर्शनम्, उतान्यस्य? यद्यन्यस्य कथं तत्सन्निधिसिद्धिः सर्वस्य तत्प्रवृत्तिः(त्तेः)। [24]न चाप्रतिभासान्न सर्वस्या(स्य) सन्निधिः इतरेतराश्रयदोषात्-त[25]दप्रतिभासात् सर्वासन्निधिः [26]ततश्च सर्वाप्रतिभास इति व्यक्तमितरेतराश्रयत्वम्। अथ तस्यैव दर्शनात् सत्स(तत्स)न्निधिः, असदेतत्; यतः पूर्वदर्शनावगतस्य वर्त्तमानदर्शनमिति न कुतश्चिदवग[27]म्यते? न तावद् दर्शनात्, सन्निहित एव तस्य वृत्तेः। न च पूर्वदृष्टसन्निहितयोरेकत्वाद् वर्त्तमानदर्शनवृत्तिः, इतरेतराश्र[28]यत्वप्रसक्तेः—तयोरेकत्वात् तद्दर्शनवृत्तिः तद्वृत्तेश्च तयोरेकत्वमितीतरेतराश्रयत्वम्।

अपि च, तद्दर्शनवृत्तेर्नायं दोषः तदप्रच्युतौ प्र[29]माणाभावात्। न च प्रत्युत्पन्नदर्शनमेव तत्र प्रमाणम्, इतरेतराश्रयदोषप्रसक्तेः। तथाहि—पूर्वदृष्टस्याप्र[30]च्युतौ प्र[31]वर्त्तमानं दर्शनं प्रमाणं सिध्यति तत्प्रामाण्यात्व(च्च) पूर्वदृष्टस्याप्रच्युतिरिति व्यक्तमितरेतराश्रयत्वम्। न च परिस्फुटप्रतिभासादेव वर्त्तमाना दृक् प्रमाणम्, काम-शोकाद्युपप्लुतवि[32]शददृशः प्रमाणताप्रसक्तेः। न च विसंवादात् सा अप्रमाणम् इयं तु विपर्ययात् प्रमाणम्, यतः संवाददृगपि पूर्वदृष्टेऽर्थे प्रव[33]र्त्तमाना न प्रमाणतया सिद्धा अ[34]न्यत्राऽप्रवृत्ता न(?)संवादकृता, ततः पूर्वदृष्टार्थग्राहित्वे दृग् भ्रान्ता प्रसक्ता। अपि च, उत्तर-

---

१-मान न पू-वा० वा०। २-दृग्वतैकत्वम् मा०।-दृग्वंतैकत्वम् आ०।-दृगतैकत्वम् वा० वा०। ३-ह्यतोऽपि वा० वा० विना। ४ भविष्यन्ति वा० वा० विना। ५ पूर्वमानगृह्णत् तदधिगम्यगम्यमधिगन्तु क्ष-वा० वा०। ६-गच्छत् पू-वा० वा० विना। ७ यदि पूर्व-वा० वा०। ८-दृगव-वा० वा० विना। ९ न च पूर्वदृष्टता नाभातीति पूर्वदृष्टताऽप्रती-हा० वि०। न च पूर्वदृष्टता नाभाति पूर्वदृष्टं ता ना भाति पूर्वदृष्टं रूपं नाभातीति पूर्वदृष्टताऽप्रती-मां० मां०। न च पूर्वदृष्टता नाभाति पूर्वदृष्टं ता नाभातीति पूर्वदृष्टताऽप्रती-वा० वा०। १० नीलार्थो-मा० मा०। ११-या प्रति-मां० मा० आ० हा० वि०। १२-न्यवेद्य एव नावेद्यतया प्रतिभासमानः स्ववेद्य एव नान्यवेद्यस्तत्रा-मा० मां०। १३-दृशाऽपाये वा० वा० विना। १४, भा नतद्गोचरः सर्वात्मा भाव्ये-वा० वा०। १५ तदापा-वा० वा०। १६-र्शनागो-वा० वा०। १७-चरार्थो आ०। १८-वतं मा० मा०।-वसतं हा०।-वसंतं वि०।-वसंत ना-आ०। १९-पयोऽभा-वा० वा०। २०-दर्शनाप्र-वा० वा०। २१ तत्वाभि-मां० मां० आ०। तथाभि-हा० वि०। २२ न वाभि-वा० वा०। २३-चासिद्धेर्न त सम्प्र-वा० वा०।-चासिद्धेर्नि व सम्प्र-आ०।-वासिद्धेर्भि च सम्प्र-हा० वि०। २४ न वा प्र-वा० वा० मां० विना। २५-दपि प्रतिभासत् सर्वा-वा० वा०। २६ ततश्च सर्वाप्रतिभासात् सर्वाप्रतिभास इति मा० मां०। २७-गम्यंते वा० वा०। २८-यप्र-वा० वा०। २९-माणमा-आ०। ३०-च्युते प्र-आ०।-च्युते प्र-हा० वि०। ३१-मान द-हा०। ३२-शाददृशः आ० हा० वि०।-शद् दृशः वा० वा०। ३३-मा न प्र-वा० वा० विना। ३४-न्यथा-हा० वि०।

ज्ञान(ने) पूर्वदर्शनग्राह्यं किं तद्दृष्टेन रूपेण प्रतिभाति, उत रूपान्तरेण? यदि पूर्वदृष्टेन तथासति पूर्वदृष्टरूपावभास एव न वर्त्तमानरूपपरिच्छेदः। अथ रूपान्तरेण तत्रापि वर्त्तमानदर्शनग्राह्यरूपतैव न पूर्वज्ञानग्राह्यता इति वर्त्तमानमेव तत्। न च ज्ञानद्वयावभासि रूपं तत्र प्रतिभातीति वक्तुं शक्यम्, ज्ञानद्वयाऽभावे तदवभासिनो रूपस्याप्यभावात् यदेव हि ज्ञानमस्ति भवतु तदवभास्येव तद्रूपम् यत्तु नष्टज्ञानं न तदवभासि युक्तम् अन्यथा सकलातीतज्ञानावभासिरूपप्रतिभासंप्रसक्तिरित्युक्तम्। तस्माद् इदानीन्तनज्ञानावभासमेवैतद् युक्तम्। न च निर्विकल्पके वर्त्तमानग्रहणे सति प्राक्तनज्ञानावभासिभावपरिच्छेदः समस्ति विकल्पद्वयानतिवृत्तेः। यतः 'सः' इति पूर्वपरिच्छेदः 'अयम्' इति प्रतिभासानुप्रवेशेन प्रतिभाति, उतानुप्रवेशेन? यद्याद्यः पक्षः, तदा 'सः' ति(इति) वा परोक्षाकारः प्रतिभासः 'अयम्' इति वा वर्त्तमानमात्रावभासः। अथानुप्रवेशेन प्रतिभासस्तदापि प्रतिभासद्वयं परस्परविविक्तमायातम्, तथा च तद्ग्राह्यस्यापि भेदः प्रतिभासभेदात्। न च तदवभासद्वयमेकाधिकरणम् परोक्षाऽपरोक्षरूपनिर्भासद्वयस्यैकाधिकरणत्वासिद्धेः अन्यथा भिन्नाधिकरणसर्वसंविदामेकाधिकरणत्वापत्तेः। तत्रैककालम् भिन्नकालं वा प्रतिभासद्वयमेकार्थम् प्रतिभासभेदात्। न चात्र प्रतिभास एव भिन्नो न प्रतिभास्यः, तद्भेदे तदभेदासिद्धेः। तथाहि—न स्वतः प्रतिभास्याभेदः सिद्धः, स्वसंविन्मात्रप्रसक्तेः। नापि प्रतिभासात् तस्य भिन्नत्वादिति नैकत्वसिद्धिः। उत्तरकालभाविनोऽपि दर्शनात् सन्निहितमात्रस्यैव तत्र प्रतिभासात् पूर्वकालादीनां तत्र प्रतिभासने वर्त्तमानतापत्तेः, तदनवभासे च तत्परिकरितरूपस्याप्यपरिच्छेदः। न च तद्गतत्वेनाऽप्रतिभासेऽप्यत्रुट्यद्रूपतया प्रतिभासात् प्रतिभास्यस्यैकत्वम् यतो विद्युदादिष्वपि पूर्वरूपाप्रतिभासनं यदि त्रुट्यद्रूपत्वमङ्गीक्रियते तर्हि पूर्वदृष्टाप्रतिभासनं वर्त्तमानं(?)वरदृशः स्तम्भादावस्तीति कथं न त्रुट्यद्रूपप्रतिभासः स्तम्भादेर्भेदः? अथ ग्राह्यस्याविरतमुपलब्धिरत्रुट्यद्रूपता विद्युदादौ त्ववभासस्य विरतिरित्यत्रुट्यद्रूपता न युक्ता, नन्वविरतोपलब्धिरपि किं तस्य, आहोस्विदन्यस्य इति वक्तव्यम्। यद्यन्यस्य कथमेकत्वम्? अथ तस्यैव, सा न सिद्धा। नहि पूर्वदृष्टस्य पुनरुपलब्धिरिति सिद्धम्।

यदपि 'पूर्वदृष्टं पश्यामि' इति व्यवसायबलात् निर्विकल्पकं दर्शनं 'पूर्वापरैकत्वग्राहि' इत्युक्तम् तदप्यसारम्, यत्ते(यतो) न व्यवसायबलाद् ग्राहकं दर्शनं व्यवस्थाप्यते किन्तु प्रतिभासवशात् अन्यथा अश्वविकल्पसमये गोदर्शनव्यवस्था न स्यात् प्रतिभासश्च निराकृतपूर्वापरभावो वर्त्तमानोर्थमारूढः परिस्फुटं सर्वं एवाभाति साक्षात्का(त्क)रणं हि परिस्फुटता तत्त्व(च्च) सन्निहितप्रतिभासनम् असन्निहितस्य साक्षात्कर्त्तुमशक्यत्वात् पूर्वदृष्टं सन्निहितं रूपमिति न तद्ग्रहः प्रत्यक्षस्वभावः। अथापि स्यात् नोत्तरप्रत्यक्षे पूर्वदृष्टं रूपमाभातीति किन्तु धर्मिरूपं नीलादिलक्षणम्, असदेतत्; पूर्वापरदर्शनप्रतिभासि स्वरूपव्यतिरिक्तस्य नीलादित्वस्य धर्मिणस्तद्भेदेऽप्यभिन्नस्याऽनुपलब्धे(ब्धेः) नहि पूर्वापरदृगवसेयं मुक्त्वा रूपमपरो नीलादिरूपो धर्मी प्रतिभाति, अप्रतिभासमानस्य नित्यत्वसाधने न काचित् क्षतिः प्रतिभासस्यैव सर्वस्यानित्यत्वसाधनात्। तत्र व्यवसायवशादध्यक्षस्य ग्रहणव्यवस्था इत्येके।

अपरे तु मन्यन्ते यद्यपि नीलाव्य(ध्य)वसाया(यात्) नीलदर्शनस्य तद्ग्रहणं व्यवस्थाप्यते तथापि

---

१-ग्राह्यं किं न दृष्टे-वा० वा०। २-दृष्टे त-भा० भा०। ३-नदृशन-आ०।-नदृशंन-वि०।-नवशंन-वा० वा०। ४-यावभावे तदभा-वा० वा० विना। ५-ज्ञानं तद्-वा० वा० विना। ६ तवभा-वा० वा०। ७-ससक्ति-वा० वा० विना। ८-भासमेवे युक्त-आ० हा० वि०।-भासस्येवैतद्युक्त-वा० वा०। ९ सति प्रसक्तेनज्ञा-वा० वा०। १०-रूपानि-वा० वा०। ११-कार्थप्र-वा० वा० वि० विना। १२ तत्र भासात् आ० हा० वि०। त भासात् भा० भा०। १३-भातात् प्र-वा० वा०। १४ प्रतिभासस्यै-वा० वा० विना। १५-भानं रदृशः भा० भा०।-भा वरदृशः हा०।-मानं शि स्तम्भा-वा० वा०।-मानवरदृशः वि०। १६-ह्यस्य वि-वा० वा०। १७ पृ० ३२० पं० २। १८ तदप्रति यते न वा० वा०। १९-नारूढः वा० वा० विना। २० तत्त्वसन्निहितप्रतिभासनमसन्निहितप्रतिभासनमसन्निहितसाक्षात्क-वा० वा०। २१-नस्यानि-आ०। २२ काचित् क्षतिः वा० वा०। २३-सस्यैवं स-भा० आ० हा० वि०।-सस्येवं स-वा० वा०। २४ अव्यव-वा० वा०। २५-हणव्य-वा० वा०। २६-लान्यव-वा० वा०। २७-सायी नी-वि०। २८-हणं व्य-वा० वा०।

लूनपुनर्जातकेशादिषु 'पूर्वदृष्टं पश्यामि' इत्यध्यवसायस्यान्यथापि प्रवृत्त्युपलब्धेः कथं तद्रूपार्थग्राह्यनुभवव्यवस्थापकत्वम्? न च विच्छेदाभिज्ञैस्तत्र भेदस्य ग्रहणादभेदग्राहिता मा भूद् अनुभवस्य तन्निबन्धना न पुनरिहैवं भेदावसायस्यैव कस्यचिदभावादि(वादिति) वक्तव्यम्, भेदावसाय एवात्र कस्यचिन्नास्तीत्यदर्शनमात्रादसिद्धेः। अपि च, अवगतविच्छेदानामपि प्रमातॄणां समानवर्ण-संस्थान-प्रमाणेषु केशादिषूपलम्भसमये न प्रत्यक्षनिबन्धनस्तदन्येषामिवाऽन्यत्वनिश्चयः अपि त्वनुभूतविच्छेदेषु पूर्वरूपाऽसम्भवादेकाकारप्रत्ययगोचरेष्वनित्येष्वनुमाननिबन्धन एव, तत्वा(च्चा)ऽन्यत्रापि समानम् विकल्पवशाच्चायमनुभवस्य विषयव्यवस्थां कुर्वन्नन्यथापि विकल्पस्य सम्भवदर्शनात् समुपजातशङ्कः कथं सर्वत्र कुर्वीत? अथ बाधकप्रमाणबलेनाऽन्यथात्वस्य प्रतीतेः, अत्र च तदभावान्न शङ्कासम्भवः। तदुक्तम्—

"बाधा ज्ञाने त्वनुत्पन्ने का शङ्का निष्प्रमाणका" [ ]

इत्युच्यते, असारमेतत्; यतो यत्र बाधकप्रमाणवृत्तिस्तत्र विपर्ययानिश्चय एवं न पुनर्बाधकनिबन्धना शङ्का युक्ता, सा हि तुल्यजातीये प्रतियोगिदर्शनाददृष्टप्रतियोगिष्वपि विशेषादर्शनात्समुपजायत इत्युक्तमसकृत्। तन्नैकत्वाव्य(ध्य)वसायिविकल्पबलान्निर्विकल्पकप्रत्यभिज्ञानस्य पूर्वदृष्टार्थाधिगन्तृत्वं व्यवस्थापयितुं शक्यम्।

यदपि कैश्चिदभ्युपगम्यते–निर्विकल्पकं ज्ञानमेकत्वग्राहि तदनन्तरभावि च सविकल्पकं प्रमाणमिति, तदपि प्रतिविहितमेव; निर्विकल्पकेनैकत्र परिच्छेदात् स्वरूपप्रतिभासनं निर्विकल्पकमुच्यते सन्निहितमेव च स्वरूपमाभाति असन्निहितप्रतिभासस्य वस्त्वसंन्निधेर्भ्रान्तत्वात् पूर्वदर्शनादिसम्बन्धितां व(च) तदा सन्निहिता नास्ति। तन्न तत्र दर्शना(न)वृत्तिः स्मृतेरेव तत्र प्रवृत्तेः, पूर्वदर्शनवृत्त्याद्यगतेः स्मरणमन्तरेण पूर्वदृगादिकं स्मरत एव 'पूर्वदृष्टम्' इत्यध्यवसायोदयाद् विस्मरणे तदभावा(वात्) स्मृतिविकलेन्द्रियजप्रतिभासस्य निर्विकल्पकत्वात्। [?? न स्मृतिकृतदर्शनमविकल्पकज्ञानावसेयमेकत्वम्। अत एव कल्पनाज्ञानमप्येकत्वाध्यवसाये शुक्तिकायां रजतबुद्धितत्त्वम् ??] न च तत्र बाधकप्रवृत्तेर्भ्रान्तता सन्निहितविषये तु प्रत्यभिज्ञाने न कदाचिद् बाधावृत्तिरिति सत्यार्थता, यतस्तथापि यदि तत्त्वमधिकथं(धिगतं) भवेत् प्रथमदर्शन एवं प्रतिभासेत अप्रतिभासनादसत्यम्। अथ स्मृतिसहिताया दृशस्तत्त्वे व्यापाराद्य प्राक्तनदर्शने प्रतिभासनम्, असारमेतत्, यतः स्मरणसहायमपि दर्शनं नैकत्वग्रहणक्षमम् तस्य वर्त्तमानमात्र एव व्यापारात् वर्त्तमानमेवाक्षप्रभवे ज्ञाने प्रतिभातीति तदेव तद्विषयो न तत्त्वम्। यच्च यदगोचरस्तद् अन्यसद्भावेऽपि न तत्र प्रतिभाति, यथा गन्धस्मृतावपि न दृशि परिमलः, दृगविषयश्च पौर्वापर्यम् तन्न स्मृतावपि तत् तत्र प्रतिभाति। तथा, स्मृतिरपि नैकत्वमवगच्छति, वर्त्तमानदृग्विषये तस्या अप्रवृत्तेः। नहि वर्त्तमानदर्शनग्राह्यं रूपं स्मृति(तिः) परामृशति परोक्षाकारतया तस्याः प्रवृत्तेः, असंस्पर्शे च न स्वविषयस्य

---

१–दृष्ट प–वि० विना। २–स्तत्र भेदग्राहिता भा० मा०।–स्तत्राभेदस्य ग्रहणादभेदस्य ग्रहणादभेदग्राहिता वा० वा०। ३–दर्शनामा–वा० वा०। ४ त्वमू–भा० मा०। ५–च्वतितेष्व–वा० वा०। ६–ना स–वा० वा०। ७–थ बाधनबाधकबलेनान्यथा–वा० वा०। ८–म्भवतस्तदु–वा० वा०। ९ वाध्याक्षा–आ० हा० वि०। १०–स्तद् विप–वा० वा०। ११–च पु–वा० वा०। १२–योगिवपि वा० वा०। १३ पृ० ३११ पं० २८। १४–कल्प ज्ञा–मा० मां०। १५–क प–वा० वा०। १६–रूपाप्र–आ०। १७–भासं निर्वि–आ०।–भासन निर्वि–मां०। १८–सन्निधे भ्रा–वा० वा०। १९–ता व त् त–वा० वा० विना। २०–वृत्ते पू–वा० वा०। २१–द्यवग–वा० वा० विना। २२–मन्तरेऽपूर्वदृगादि–वा० वा०। २३–दया वि–आ०। २४–रणा त–वा० वा०। २५–कलेन्द्रियाजनप्र–वा० वा०। २६ स्मृतिकृतं दर्शनं विकल्पकमिति नाधिकल्पकल्पकज्ञानाव–वा० वा०। २७–त्वाव्यवसायं मुक्तिकायां र–वा० वा०। २८–बुद्धितवं न आ०।–बुद्धितवं न हा० वि०। २९–धकं प्रवृत्तेः भ्रांतता स–वा० वा०। ३० वाध्यावृ–आ०। ३१–वतंत् प्रतिभासेताप्रतिभासेताऽप्रतिभासनादसत्य–वा० वा०।–व प्रतिभासेताप्रतिभासेताऽप्रतिभासनादसत्य–मां०।। ३२–नप्रद–वा० वा०। ३३–दर्शनं चैकत्वग्र–वा० वा०।–दर्शनं चैकग्र–मां० मां०।–दर्शनं चैकत्वं प्र–हा० वि०। ३४ नन्वेवं य–वा० वा०। ३५–यदगो–वा० वा० विना। ३६–ग्राह्यरूपं स्मृ–आ०।–ग्राह्यरूपां स्मृ–हा० वि०।–ग्राह्यां रूपः स्मृ–वा० वा०। ३७–वृत्ते दसं–वा० वा०।

तेन सहैक्यमवगमयति । न च दर्शन-स्मरणयोरेकाधिकरणता तत्त्वम् तथाप्रतीत्यभावात् तयोः स्फुटास्फुटावाकारौ बिभ्राणे दर्शन-स्मरणे नैकाधिकरणतामश्नुवीयाताम् सर्वसंविदामेकाधिकरणतापत्तेः । न च तत्र प्रतिभासभेदाद् भिन्नार्थता, स्फुटेतरप्रतिभासभेदाद् दर्शन-स्मरणयोरपि भिन्नार्थताप्रसक्तेः—दर्शनं हि साक्षात्करणाकारम् स्मृतिश्च परोक्षाव्य(ध्य)वसायस्वभावेपि(ति) कथं तयोः प्रतिभासभेदादि(दाद्) भिन्नार्थत्वम् । तन्न ताभ्यामपि एकत्वप्रतिपत्तिः ।

नाप्यात्मा एकत्वं प्रतिपद्यते दर्शन-स्मरणाभावे स्वापादावर्थप्रतिपत्तेस्ततोऽभावात् । दर्शन—स्मरणे च पूर्वापरार्थैः(र्थ)परिहारेण प्रवर्तमाने न तयोरेकत्वमधिगच्छत इति न तद्द्वारेणात्मापि तत्त्वमवैति । न चात्मनोऽपि पूर्वापरावस्थयोरेकत्वावगमः पूर्वबोधेन भाविविबोधसम्बन्धितानु(तानन्नु)भवात् उत्तरानुभवेन पूर्ववित्सम्बन्धिताऽनवगमात्, अनुभवे वाऽनाद्यनन्तसकलजन्मपरम्परापरिच्छेदप्रसक्तिः । न च शुद्ध एवात्मा स्वसंवेदने प्रतिभाति दशा(शां) परिगतः तासामप्रतिभासे तद्गतत्वेन तस्याप्यप्रतिभासनादित्युक्तत्वात् । न च दर्शन-स्मरणव्यतिरेकेणाऽन्योऽनुसन्धाना(ता) भाति, 'ते चान्योऽन्यपरिहारेण स्थिते इति कथमेक आत्मा ? न च द्रष्टृ(ष्टुः) स्वरूपं स्मर्तृरूपतया 'द(द्र)ष्टाऽहं स्मरामि' इति प्रतीतौ प्रतीतिः( प्रतीयत इति ) कथं नैक आत्मा ? यतो द्रष्ट(ष्टृ)स्वरूपं किं स्मर्तृस्वरूपानुप्रवेशेन प्रतिभाति, उतानुप्रवेशेन ? ध(यद्य)नुप्रवेशेन तदा द्रष्टृस्वरूपता ( द्रष्टृस्वरूपता स्मर्तृस्वरूपता ) वा, एकस्य रूपस्येतरत्रानुप्रवेशात् । अथाननुप्रवेशेन तदा द्रष्टृ-स्मर्तृरूपे अन्योन्यं भिन्ने स च नैक आत्मा । न च द्रष्टृ-स्मर्तृरूपो विकार एव भिद्यते नात्मेति क्रमभाविविकारप्रतिपत्तौ तद्गतत्वेन तस्याप्य(स्यापि) प्रतिपत्तेः विकारव्यतिरेकेण तस्याऽनुपलब्धेरित्युक्तत्वाच्चेति नात्मनोऽप्येकत्वप्रतिपत्तिः । न च स्मरणोत्तरकालभाविनी 'स एवायम्' इत्यनुसन्धानप्रतिपत्तिरक्षान्वयव्यतिरेकानुविधायितया प्रत्यक्षं प्रमाणम्, तस्याः प्रत्यक्षत्वानुपपत्तेः । यदि प्रत्यक्षप्रभवेयं भवेत् पौर्वापर्ये वृत्तिमती न स्यात् अक्षस्य वर्त्तमान एव व्यापारात् । न च स्मरणोपढौकिते पूर्वापरभावेऽक्षस्य वृत्तेः तत्प्रभवायास्तस्यास्तत्र वृत्तिर्युक्ता, अक्षस्य स्मरणोपहितेऽपि पौर्वापर्येऽविषयत्वेनाप्रवृत्तेस्तदुद्भवायास्तस्या अपि प्रवृत्त्यनुपपत्ते(त्तेः) । अ(न)ह्युत्पलरूपप्रवृत्तिमदक्षं स्मरणोपनीतेऽपि गन्धादौ प्रतिपत्तिजननं (?) स्मरणम् न च चक्षुषो गन्धाविषयत्वात् न च तत्र लोचनसंवित्प्रभवः स्मरणोपनीतपौर्वापर्येऽप्यक्ष(क्षा)विषयत्वस्य तुल्यत्वात् । अथ कथमक्षव्यापारानन्तरं प्रत्यभिज्ञा उदयमासादयति यद्यक्षप्रभवान्न( वा न ) भवेत् ? न, तत्र सति पुरोव्यवस्थितवस्तुदर्शने पूर्वदृष्टे स्मृतेरुदयात् यथा दूरव्यवस्थितचन्दनाद्यर्थदर्शनात् गन्धस्मृतेः 'सुरभि चन्दनम्' इति प्रतिपत्तिः । न च लोचनाविषयत्वाद् गन्धस्य तद्विशिष्ट(ष्ट)चन्दनप्रतिपत्तिस्तद्गतरूपदर्शनाल्लिङ्गप्रभवेति वक्तव्यम्, प्रकृतेऽपि समानत्वात् । तथाहि-वर्तमानदर्शनात् पूर्वकालाद्यनुस्मरणात् तद्विशिष्टपुरोव्यवस्थितार्थप्रतिपत्तिरानुमानिकी पूर्वकालादिसम्बन्धितायास्तदा प्रत्यस्तमयतोऽक्षागोचरत्वात् तामध्यवस(स्य)न्ती प्रत्यभिज्ञा कथं प्रत्यक्षतामनुभवेत् ? अन्यथा परोक्षप्रतिपत्तेः सर्वस्याः प्रत्यक्षताप्रसक्तिः । अथ परोक्ष(क्षा)कारैव प्रतीतिरप्रत्यक्षा प्रत्यभिज्ञा तु पूर्वदृगादियोगित्वे परोक्षाकारा वर्त्तमानत्वे प्रत्यक्षाकारेति स्मरणाऽध्यक्षरूपा एका प्रतीतिः, नैतदेवम्;

१-भ्राणा द-वा० वा० विना । २-रणे मश्नुवीयाताम् वा० वा० । ३-मभ्युपधीयताम् वा० वा० विना० । ४-थं न तयोः प्रतिभासभेदादभिन्नार्थत्वम् वा० वा० विना । ५-रणा च वा० वा० ।-रणो च आ० हा० वि० । ६-रार्थे प-वा० वा० ।-रार्थौ प-भा० मा० । ७ पूर्वाबो-भा० मा० । पूर्वरोधे-वा० वा० । ८-नुभावा-वा० वा० हा० वि० । ९ ते चान्यो-आ० विना । १०-या द्रष्टाऽ-वा० वा० । ११-ति प्रतीति क-वा० वा० । १२ यतो दृष्ट-वा० वा० विना । १३-न ह्यनु-वा० वा० विना । १४ द्रष्टृरू- वा० वा० । १५-रूपतां वा मा० हा० वि० ।-रूपंता वा मा० । १६ एवं भि-आ० हा० वि० । एवि भि-भा० मा० । १७-वृत्तेस्तद्भवा-आ० ।-वृत्तेस्तुस्तदुद्भवा-भा० मा० । १८-पत्तेः त तह्यत्पल-आ० हा० वि० ।-पत्ते तर्ह्युत्पल-भा० मा० । १९-वृत्तिदक्षं स-वा० वा० ।-वृत्तिदक्ष स-भा० हा० वि० । २०-पनी पि वा० वा० विना । २१-जनस-वा० वा० । अत्र 'प्रतिपत्तिजननसमर्थम्' इति सम्भवेत् । २२-त्वात् त च तत्र आ० । २३ तत्रालो-भा० मा० । २४ भवेन्न सति आ० । भवेत् तत्र सति हा० वि० । २५-ना दन्ध-आ० । २६-न्दनाद्यमिति वा० वा० । २७-पत्तिस्तद्गत-भा० मा० । २८-लादिसंबन्धिता-वा० वा० । २९-यतोऽक्षी-भा० मा० । ३०-कारो व-आ० हा० वि० ।

आकारद्वयायोगात् एकवस्तुनं आकारलक्षणत्वात् तद्भेदे ज्ञानस्यापि भेदात् अन्यथा परोक्षाऽपरोक्षाकारभेदेऽपि स्मरण-दर्शनयोरभेदप्रसक्तिर्भवेदिति सर्वमपि ज्ञानं स्मृतिः प्रत्यक्षं वा भवेत्, प्रथमपक्षेऽस्पष्टप्रतिभासप्रसक्तिः। द्वितीये तु सर्वप्रतिभासो विशब्दः(दः) स्यात्। न च स्मरण-दर्शनयोरस्पष्ट-स्पष्टप्रतिभासभेदाद् भेदः, प्रत्यभिज्ञानेऽपि 'सः' इति पूर्वोल्लेखस्याष्ट(स्यास्पष्ट)प्रतिभासतया 'अयम्' इति वर्त्तमानोल्लेखः(खस्य) स्पष्टप्रतिभासरूपतया प्रतिभासभेदात् भेदस्य न्यायप्राप्तत्वात्। न च 'स एवायम्' इत्येकत्वाध्यवसायादेकत्वम् यतः किं पूर्वापराध्यवसायस्यैकत्वम्, यद् वा अध्यवसीयमानस्य? न तावदाद्यः पक्षः अन्योन्यरूपविवेकेन पूर्वापरयोरवभासनात्। तथाहि—'सः' इति पूर्वरूपाध्यवसायो वर्त्तमानरूपाध्यवसायविविक्तः प्रतिभाति, 'अयम्' इति च वर्त्तमानाकारावभासः पूर्वावभासविमिश्रतनुराभाति, परस्पररूपानुप्रवेशे वा 'सः' इति वा प्रतिभासः स्यात् 'अयम्' इति वा, तथा च कुतः 'स एव' इत्येका प्रत्यभिज्ञा? परस्परव्यतिरेके च परोक्षाऽपरोक्षप्रतिभासयोर्भेद एवेति कथमेका प्रत्यभिज्ञा? नाप्यवसीयमानस्याऽभेदः, अवसायभेदे तदवसीयमानस्यापि भेदात्। न च 'स एवायम्' इति व्यवहारैकत्वादेकत्वम्, यतो व्यवहारो ज्ञानम्, अभिधानम्, प्रवृत्तिर्वा? तत्र यदि ज्ञानम् तत्राप्यविकल्पां(ल्पम्), स्मृतिः, कल्पना वा? यदि निर्विकल्पकं तत् पूर्वापरकालभावि भिन्नमेव एककालमपि पूर्वापरार्थग्राहि प्रतिभासभेदाद् भिन्नम्। अथ स्मृतिः सापि दर्शनाद् भिन्नैव कथं तदर्थस्यैकत्वं साधयति? न च पूर्वदर्शनविषय वृत्तिः स्मृतिः, तद्विषयत्वस्य तत्रासिद्धेः। तदा(था)हि—न तावद् दर्शनी(नात्) स्मृतेस्तद्विषयत्वं सिध्यति दर्शनकाले स्मृतेरभावात्, तदभावे च न तदर्थवेदनं ततः सिध्यति। नापि स्मृतेरेकार्थता वृत्तिः तत्काले दर्शनस्याभावात्, तद्भावे वा स्मृतेरयोगात्। नहि दर्शनावस्थायां स्मृतिरुदयवती उपयोगवती वा, दर्शनादेवार्थप्रतिपत्तेः। ततो दर्शनकालपरिहारेण प्रवर्त्तमाना स्मृतिर्न दर्शनार्थविषयतामात्मनोऽधिगन्तुं समर्था। अस्पष्टप्रतिभासा च स्मृतिः कथं स्पष्टप्रतिभासा(स)दृग्विषयमर्थमधिगच्छति? इति न तदर्थविषया स्मृतिर्वृत्तिः सिद्धा प्रतिभासभेदस्य भेदकत्वात् अन्यथा भेदोच्छेदप्रसक्तिरित्युक्तत्वात्। न च कल्पनाप्येका व्यवहृतिः यतः पूर्वापरावभासा(भासा 'स एव) अयम्' इत्युल्लेखव(वती) सापि भिन्नैवेत्युक्तम्। अभिधानमपि 'सः' इति 'अयम्' अपि (इति) च भिन्नम् भिन्नार्थं च प्रतिभाति एकार्थत्व(त्वे) पर्यायताप्रसक्तेः। तन्न अभिधाप्येका व्यवहृतिः। प्रवृत्तिस्तु क्रियारूपत्वात् पूर्वापरभाविनी भिन्नैवेति कुतो व्यवहारैकत्वादप्येकत्वम्।

अथैकत्वाध्यवसायः 'स एवायम्' इति, संवादश्च तत्र विद्यते एवेति कथं न तत्र प्रत्यभिज्ञा प्रमाणम्? उच्यते, प्रतिभास एवाध्यवसाय-संवादो प्रतिसत्त्वन्ये(?)वा सकल एव निरस्तपूर्वापरभावः स्वावधिकमर्थं वेत्ति भिन्नकालावधेस्तस्य संवेदनासम्भवात्। तथाहि-संवेद्यमानरूपसद्भावे यस्तु संवेद्यते वेदनकाल एव च संवेद्यमानं रूपमस्ति, कालान्तरे तस्य सद्भावाभ्युपगमे स्वत एव संवेदनत्वप्राप्तेः(?)तत्त्वसंवेदनसमयाध्यासितमेव सर्वमाभाति नान्यसमयादियोगि अन्यकालादि-

---

१-गादेवस्तु-वा० वा०। २-न अका-हा० वि० विना। ३ परोक्षप-आ० विना। ४ ज्ञान स्मृ-वा० वा०। ५ भवे प्रथम पक्षेऽस्प-वा० वा०। ६-रस्पष्टप्र-वा० वा० विना। ७-अत्र 'ष्ट'स्थाने लिपिकारेण "पू" इति लिपिः कृता। ८-दा प्रतिज्ञा-वा० वा०। ९ पूर्वोल्लेखोस्पष्टप्र-वा० वा० विना। १०-रयो र-वा० वा० विना। ११-था वत् कुतः भा० भा०। १२ इत्येको प्र-भा० भा०। १३ परोक्षस्यतिभासयो भेदे एवेति वा० वा०। १४ तत्राप्य-वा० वा०। १५-कल्पा स्मृ-वा० वा० विना। १६-मपि पूर्वग्राहि प्रभास-वा० वा०।-मपि पूतिभास-भां० भां०। १७-त्र विवा स्मृ-वा० वा०। १८ स्मृति त-वा० वा०। १९-ना स्मृ-वा० वा०। २०-दर्शवे-वा० वा०। २१ स्मृतेरुद्-वा० वा०। २२-नार्थं वि-वा० वा० विना। २३-वृत्ति सि-आ० हा० वि० २४-वहतिर्य-आ० हा० वि०। २५-राभास एवाधसित्युल्लेखवमी सापि वा० वा०। २६-धानाम-वा० वा०। २७-कार्थत्व पर्यायतो प्र-वा० वा०। २८ तत्राभि-हा० वि०। २९-वाप्यका वा० वा०। ३०-स्तुमि क्रि-भां० भां०। ३१-त्वाऽव्यव-वा० वा०। ३२-च्यतो प्र-वा० वा०। ३३-ध्यवासाय-वा० वा०। ३४-प्रतिसत्त्वन्ये वा वा० वा०।-प्रतिसत्त्वत्ये वा आ० हा०।-प्रतिभासत्वेत्ये वा वि०। ३५-मर्थं वेत्ति भि-वा० वा०। ३६-न्तर तस्य वा० वा०। ३७-गामो स्व-वा० वा०। ३८-न समया-वा० वा०। ३९-प्राप्ते तत्त्व-भां० भां०।

योगिनोऽपि तदा प्रतिभासने तदैव प्रकाशरूपसद्भाव इति वर्तमानैव पूर्वकालादियोगता भवेत् नातीता। प्रकाशमानरूपविरहे च न तदा पूर्वकालादियोगितायाः प्रतिभासनमित्येकत्वस्यानुपलब्धेर्न प्रत्यभिज्ञा कथञ्चिदपि सम्भविनी। न च संवादोऽप्येकत्वे सिद्धः, स हि तदर्थज्ञा(?)न्तरवृत्तिः म(न)रैकत्वे पुनः ज्ञानवृत्तिः इत्युक्तम्। तज्जातीये तु पुनर्दर्शनं प्रवर्तते तदैव च संवादात् समभिमानो लोकस्य तत्त्वाध्यवसायात्। तथाहि-'स एवायम्' इति तदर्थक्रियाकारी अयं भाव इत्युच्यते तदर्थकारित्वं च भिन्नस्याप्युपलब्धम् यथा चक्षुरादेस्तज्ज्ञानजननम् तत्रैव च 'स एवायम्' इति भेदेऽप्येकत्वव्यवहारः अथवा पूर्वाऽपरदर्शनाभ्यां परस्परपरिहारेण प्रवृत्ताभ्यामेकत्वलक्षणस्य तदर्थस्य बाधितत्वादनादिकाला भ्रान्तिरेव प्रत्यभिज्ञा। तत्र क्षणिकाभिव्यक्तिषु शब्दमात्रासु निर्विकल्पकप्रत्यभिज्ञावसितं स्थैर्यम् निर्विकल्पकस्य सविकल्पकस्य वा प्रत्यभिज्ञानस्य प्रामाण्यासिद्धितस्तत्त्वासाधकत्वात्। तत्र प्रत्यक्षविरोधमनुभवन्ति क्षणभङ्गवादिनः।

यदपि 'नाशस्य कारणाधीनत्वादसन्निहिते(त)कारणस्य घटादिषु अनुदयात् विनाशकारणात् प्रागनिवृत्तरूपा एव घटादयः, तदपि प्रतिक्षणध्वंसितामावे सर्वसामर्थ्याभावलक्षणस्यासत्त्वस्य भावात् स्वरसविनाशितया [?? नापि संयोगाद् विनाशमनुभवन्तीध्य(न्ध)नादय इति ??] प्रतिविहितमेव। तथापि किञ्चिद् उच्यते-तत्रेन्धनादीनामग्निसंयोगावस्थायां त्रितयमुपलभ्यते-तदेवेन्धनादि, कश्चिद् विकारः, तुच्छरूपस्वभावः कल्पनाज्ञानप्रतिभासी, तत्राग्न्यादीनां क्व व्यापार इति वक्तव्यम्। न तावद् इन्धनादिजन्मनि स्वहेतुत एवैषामुत्पत्तेः। नाप्यङ्गारादौ विवादाभावात् अग्न्यादिभ्यश्चाङ्गाराद्युत्पत्ताविन्धनादेरनिवृत्तत्वात् तथैवोपलब्ध्यादिप्रसङ्गः। न चाङ्गारादिभ्यः काष्ठादेर्ध्वं(ध्वं)सान्नायं दोषः। ततो वस्तुरूपापरध्वंसोपगमेऽपि काष्ठादेस्तदवस्थात् पुनरपि स्वार्थक्रियानिवृत्तेर्वक(?)प्रसक्तिः। ततोऽप्यपरतथाभूतध्वंसोत्पत्त्यभ्युपगमेऽप्यनवस्था वाच्या। अथ भावान्तरमेव प्रध्वंसाभावः नापरः तत् कथं काष्ठादेस्तथोपलब्ध्यादिप्रसङ्गः? नैतदेवम्, यतः 'काष्ठादेरङ्गारादिरेव ध्वंसो नापरः' इत्यत्र किञ्चिन्निबन्धनं वाच्यम्, तस्मिन् सति तन्निवृत्तिरिति चेत्, न; तुच्छस्वभावनिवृत्त्यनङ्गीकरणेऽङ्गारादिकमेवार्थान्तरं निवृत्तिशब्देनोक्तम्। ततश्चायं वाक्यार्थः-अङ्गारादिभावमावात्(?)काष्ठादेरङ्गारादिकं ध्वंस इति। न(?)चाङ्गारादेर्भावस्यात्मनि हेतुत्वविरोधात् अप्रस्तुताभिधानं च प्रसक्तम् अत्स्या(ग्न्या)दिभ्यस्तदुत्पादाभिधानात् काष्ठादीनां निवृत्तौ प्रस्तुतायामर्थान्तरविधाने तेषामनिवर्त्तनात्।

यदप्यभ्यधायि 'बुद्धि-प्रदीपादयो येऽप्यनु(नुप)जातविकारा ध्वंसमासादयन्ति तेऽप्यात्माव्यक्तरूपां(पतां)विकारान्तरम(मे)व ध्वंसमनुभवन्ति' इति, तदप्यसङ्गतम्; बुद्ध्यादीनामात्मरूपविकारापत्तौ प्रमाणाभावात् आत्मनश्चासत्त्वात् कथं तद्रूपता बुद्ध्यादीनां विकारः? 'न च परिणामः सम्भवति' इति प्राक् प्रतिपादितम्। प्रदीपादेस्तु अव्यक्तभावः कार्यदर्शनादनुमेयः तस्यातीन्द्रियत्वात्। न च ध्वस्तस्य प्रदीपादेः किञ्चित् कार्यमुपलभ्यते यतस्तदव्यक्तभावानुमितिः स्यात्। तन्न भावान्तरं प्रध्वंसाभावः। भावान्तरस्य च प्रध्वंसत्वे तद्विनाशाद् घटाद्युन्मज्जनप्रसक्तिः। न च

---

१-ता भवेन्नतीता भा० मा० आ०।-ता भावेन्नतीता हा० वि०। २-रहे चेन्न वा० बा० विना। ३-समभिलेन-भा० मा० आ० हा० वि० ४-कत्व सि-वा० बा० विना। ५ सिद्धेः वा० बा०। ६-वृत्तिर्नैक-वा० बा० विना। ७ तत्रा क्ष-आ०। तत्वा क्ष-हा० वि०। ८ स्थैर्यं नि-वा० बा० विना। ९-णसङ्ग-भा० मा०। १० पृ० ३२० पं० २२। ११-घटामुनुद-वा० बा०। घटादिषूनुद-हा०। घटादषूनुद-वि०। १२-न्तीधूना-भा०। १३ स्थायां त त्रतय-वा० बा०। १४ न वा-वा० बा० हा० वि०। १५-ष्ठादेर्वैशान्नांय दो-भा० मा०।-ष्ठादेर्वैशान्तायं आ०।-ष्ठादेर्वैशात्तायं हा० वि०।-ष्ठादेर्विनाशान्नायं वि०स०। १६-श्चाव्यं दो-वा० बा०। १७-निवर्तप्र-वा० बा०।-निवृत्तेर्वर्त्तकप्र-भा० मा०।-निवृत्तेर्वर्त्तकप्र-हा०।-निवृत्तेर्वर्त्तकप्र-वि०।-निवृत्तेर्वत्तकप्र-वि० स०। १८-वृत्यमंगी-वा० बा०। १९-न्तर नि-वा० बा० विना। २०-रादिभाविभा-वा० बा०। २१-रादिक ध्वं-भा० मा०। २२-रादिभावेङ्गारादेर्भावः स्वात्मनि मा०।-रादिभावेङ्गारादेर्भावः स्वात्मनि भा०।-रादिभावे देर्भावः आत्मानि वा० बा०। २३-प्यामनव-वा० बा०। २४ पृ० ३२१ पं० ३। २५-न्ति तत्मा व्यक्तरूपतां वि-भा० बा०। २६-व्यक्ताभा-भा०। २७-भावका-हा० वि०।

कपालादेर्भावरूपेतैव ध्वस्ता नाभावात्मकतेति नायं दोषः भावान्तररूपस्याभावस्य तदभावे प्रच्युतत्वात्। न च कृतकस्याभावस्याविनाशितायामनित्यत्वेन कृतकत्वस्य व्याप्तिः सिध्येत् अकृतकत्वे त्वभ्युपगम्यमाने भावान्तरकार्यात्मकत्वंसो(त्वं ध्वंसो)न भवेत्। प्रध्वंसाभावाविनाशे तु सर्वदा प्रध्वंसद्भा(सद्भा)वात् घटादीनां सत्ता न भवेत्। ततो यथा कारणस्वरूपः प्रागभावः कार्योदये कारणनिवृत्तौ निवर्त्तते—अन्यथा तदात्मकत्वायोगात्—तथा कार्यात्मा ध्वंसाभावोऽपीति नष्टैर्घटादिभिः पुनर्भवितव्यमेव। न च यथा हेतुवन्धे देवदत्तस्य न पुनः प्रादुर्भावः तथेहापीति वक्तव्यम्, देवदत्तहेतुर्देवदत्तमरणारूपत्वात् तस्य दण्डादिकल्पत्वात्। तत्र कपालादिरूपं भावान्तरं घटादेः ध्वंसः तत्र कारकव्यापारासम्भवात् क्रियाप्रतिषेधमात्रप्राप्तेः अकारकस्य वा हेतुकत्वादहेतुमत्त्वाभ्युपगमोऽभावस्य विरुध्येत। हेतुमत्त्वेऽभावस्य कार्यत्वाद् अभावरूपताप्रच्युतिप्रसङ्गः भावस्य कार्यलक्षणत्वात्। तथाहि—यत् स्वकारणसद्भावे भवति तदभावे च न भवति तत् कार्यमुच्यते, भवनधर्मा च कथं न भावः? यतो 'भवति' इति भावः उच्यते इत्यङ्कुरादेरपि भावशब्दप्रवृत्तिनिमित्तं नापरमुपलभ्यते, तच्चेदभावेऽप्यस्ति कथमसौ न भ(भा)वः? न चार्थक्रियासामर्थ्यं भावशब्दप्रवृत्तिनिमित्तम् तथा(तद्वा)भावे नास्तीति वक्तव्यम्, सर्वसामर्थ्यविकलस्य तस्य प्रतीतिविषयताऽभावात् कथं हेतुमत्त्वावगतिः? प्रतीतिजनकत्वे वा कथं न सामर्थ्ययोग्यता? अथ कार्यत्वे सत्यपि यथा घट-पटादीनां भेदः प्रतिनियतविज्ञानविषयतया तथा भावाऽभावयोः समानेऽपि कार्यत्वे सत्प्रत्ययविषयस्य भावता असत्प्रत्ययविषयस्य चा(चा)भावरूपतेति, असदेतत्; असत्प्रत्ययविषयत्वे कार्यताऽप्यस्य दूरोत्सारितैव। अथ स्वहेतुभावे भावात् कार्यता अस्य तर्हि कथं न सत्प्रत्ययं(य)विषयता? तथाहि—यद्यसौ 'भवति' इति प्रतीयते 'सन्' इत्यपि प्रतीयेत, नहि 'अस्ति' 'भवति' 'सद्भावः' इति शब्दानां कश्चिदर्थभेदो विद्वद्भिरिष्यते, अथ चा(चा)भावात्मकतयैवासौ भवति, न; व्याहतत्वात्। यतो 'न भवति' इत्यभाव उच्यते स कथं भवतीति? स्वग्राहिणि ज्ञाने प्रतिनियतेन रूपेणाऽप्रतिभासनात् 'अभावः' इत्येतदपि न वक्तव्यम्, अत्यन्तपरोक्षचक्षुरादीनामप्यभावताप्रसक्तेः। न वाभावस्य भवितृषु पर्युदासात् प्रसज्यप्रतिषेधो भिद्यते, नवाऽसद्रूपत्वस्य विधानात् स पर्युदासाद् भिद्यते असद्रूपस्य भवनविरोधात्, 'भवति' इति हि भूत्या सत्तयाऽभिसम्बध्यते, एवं कथमसद्रूपस्य विधानं विधिः सर्वदा प्राधान्यात्? नञर्थश्च पर्युदास एवैको भवेत् यतो यदि कुतश्चित् किञ्चिन्निवर्त्तेत तदा तत् पर्युदासेन तद्व्यतिरेकि परामृश्येत न चैवं भवति, 'निवृत्तिर्भवति' इत्युक्तेऽर्थान्तरस्यैव कस्यचित् सर्वत्र विधानात्, एवं वस्त्वन्तरमेवोक्तं स्यात् न तयोर्विवेकः, अविवेके च न पर्युदासः। अपि च, यद्यग्न्यादिभ्योऽभावो भवेत् तद्भावे काष्ठादयः किमिति नोपलभ्यन्ते? न ह्यग्न्यादिभ्यो ध्वंससद्भावेऽपि काष्ठादयो निवृत्ताः ध्वंसोत्पादन एव अग्न्यादीनां चरितार्थत्वात् काष्ठोपमर्देन ध्वंसस्योत्पत्तेः। न तेषामुपलब्धिरिति चेत्, कुतः पुनस्तदुपमर्दः? न तावत् प्रध्वंसाभावात् काष्ठादिसत्ताकाले तस्याभावात्। नाग्न्यादिभ्यः ध्वंसाविर्भावि(व)न एव तेषां

१-एतेव वा० बा० विना। २ सिद्धेतुः अकृ-वा० बा०। ३ प्रध्वंस इति चान् घ-वा० बा०। ४ पुनर्भङ्क्तव्य-वा० बा०। पुनर्भक्तव्य-भा०। पुनर्मुक्तव्य-भा०। ५-था हेतुवन्धे वा० बा०।-था हेतुवन्धे हा० वि०। अत्र 'हन्तुर्वधे' इति पाठः स्यात्। ६ अत्र 'देवदत्तहन्तुर्देवदत्तमरणरूपत्वाद्' इति संभाव्यते। ७ वा हेतुमत्ताभ्युप-आ० हा० वि०। चा हेतुमत्ताभ्युप-भा० मा०। ८ भवतः न चा-वा० बा०। भव नवा-हा० वि०। ९-था भवे भा० मा०।-था भावं ना-हा० वि०। १०-स्य प्र-वा० बा० विना। ११-मर्थ्यायो-वा० बा० विना। १२ घटापटादी-वा० बा० भा० मा०। घटादी-हा०। १३-नां भेद प्र-वा० बा० विना। १४-यस्य चा भावरूपतेति वा० बा० विना। १५ सद्भाव इ-वा० बा०। १६-कताया वासौ वा० बा०।-कतायैवासौ आ० हा० वि०। १७-त्वात् यैतो वा० बा०। १८-भावत्येतेतदपि न च घ-वा० बा०। १९-क्षुदानीम-वा० बा०। २० वास्य आ० हा० वि०। २१-विविषु प-वा० बा०।-वितृष्णु प-वि०। २२-द्यते सद्रू-वा० बा०। २३-वतीतिति हि वा० बा०। २४ एव क-आ०। २५-थनः स-वा० बा०। २६ सर्वदाऽप्रा-भा०। सर्वद प्रधानात् वा० बा०। २७-वर्तते त-वा० बा०। २८ न चैकं भ-वा० बा०। २९-द्यस्त्यादि-वा० बा०। ३०-द्भावे को काष्ठाद-वा० बा०। ३१ ह्यस्यादि-आ० हा० वि०। ३२ एवात्मादी-वा० बा०। ३३ न भावत् बा० वा० विना। ३४-ध्वंसाक्षात् काष्ठादि-भा० मा० आ० हा० वि०। ३५-साविन एव तेषां भा० मा०।-सादेर्भावनं एव तेषां आ० हा० वि०।

व्यापारात्। न चोत्पन्नः प्रध्वंसाभावः काष्ठादीनुपमर्दयति तद्यौगपद्यप्रसङ्गात्; तथा च सत्यविरोधप्राप्तिः। ध्वंसेन च काष्ठादेर्विनाशने विकल्पत्रयस्य तदवस्थत्वात् ततश्चानवस्था। न च ध्वंसेनावृतत्वात् काष्ठादेरनुपलम्भः तदवस्थे तस्मिन्नावरणायोगात् ततो विकारभावे वा पुनरपि विकल्पत्रयान तिवृत्तिः। किञ्च, यदि हेतुमान् विनाशस्तदा तद्भेदात् भ(स) भेदं किं नानुभवेत्? कार्यात्म(त्मा)नो हि घटादयः कारणभेदाद् भेदमनुभवन्तोऽध्यक्षत एवावसीयन्ते, नैवमनासादितभावान्तरसम्बन्धः प्रच्युतिमात्रस्वभावो ध्वंसः तस्याभ्यभिघातादिहेतुभेदेऽपि तुस्व(च्छ)रूपतयैव सर्वत्र विकल्पज्ञानेऽवभासनात्। नहि 'अभावो भावः' इति तुच्छरूपतामपहायापरं तस्य किञ्चिद् रूपमीक्ष्यते हेतुमत्वे च तदवस्थस्तस्य विनाशप्रसङ्गः। अथ विनाशस्य विनाशहेतुर्न दृष्ट इति नासौ विनश्यति। तदुक्तम्—

"घटादिषु (?) यथा हेतवो ध्वंसकारिणः।
नैवं नाशस्य सो हेतुस्तस्य सञ्जायते कथम्?" [ ] इति।

नन्वेवं बुद्ध्यादीनामप्यविनाशिताप्रसक्तिः विनाशहेत्वदर्शनात्। अथात्राऽदृष्टोऽपि ध्वंसहेतुः कल्प्यते अहेतुकविनाशानुपपत्तेः अन्यत्र तस्य हेतुमत्त्वदर्शनात्, बुद्ध्यादीनां चोत्तरकालं स्वरूपासंवेदनात् अवस्थितरूपत्वे च तेषां तदयोगादिति, असदेतत्; स्वसंविदितत्वानभ्युपगमे बुद्ध्यादीनामस्य प्रलापमात्रत्वात्। तथाहि—यथा घटादयो भावा न सर्वदैव ज्ञानविषयतामुपगच्छन्ति तथा बुद्ध्यादयोऽपि ज्ञानान्तरसंवेद्याः सन्तोऽपि नावश्यमनुभवपथमुपयास्यन्तीति कुतस्तेषामनुपलम्भादभावनिश्चयः? न चैकदोपलब्धानामन्यथा(दा)ऽत्यन्तानुपलम्भादसत्त्वनिश्चयो युक्तः, यत उपलम्भः प्रमेयकार्यम्, न च कार्यनिवृत्तिः कारणाभावं गमयति, "न हि अवश्यं कारणानि फलवन्ति" [ ] इति न्यायात् केवलमनुपलभ्यमाना बुद्ध्यादय उपलम्भप्रत्ययान्तरं विकलान 'असन्त एव' इति निश्चयः। येषां त्वर्थापत्तिसमधिगम्या बुद्धिस्तेषां चक्षुरादीनामिव कार्यानारम्भेऽपि कुतोऽस्या प्रम(भमा)वो भवेत्? अथवा एकैवावस्थितरूपा बुद्धिस्तांस्तान् पदार्थान् क्रमेणोपलभते, न ह्यस्या घटादीनामिव विनाशकारणमुपपश्यामः, ततोऽदृष्टोऽपि यथाऽस्या विनाशहेतुः कल्प्यते विनाशस्यापि तथैव कल्प्यताम्, ततो विनाशेनापि स्वविषयज्ञानजननसामर्थ्यं बिभ्राणेन विनष्टव्यमिति घटादीनां पुनरप्युन्मज्जनप्रसङ्गः। य(त)तोऽयमहेतुर्निःस्वभावोऽभ्युपगन्तव्यः, अग्निसंयोगादयस्तु काष्ठादिष्वङ्गारादिकमेव जनयन्ति, काष्ठादयस्तु स्वरसत एवं निरुध्यत(न्त) इत्यनवद्यम्। लोकश्चाकिञ्चिद्रूपतामेव नाशस्य प्रतिपद्यते, तत्त्वमपि(?) चा(चा)सतोऽकिञ्चिद्रूपतैव, यतोऽवैपरीत्यं तत्त्वमुच्यते, न चैतद् विपरीतं यत् 'अकिञ्चिद्रूपो ध्वंसः' इति। ततो यद्यपि 'सदसती तत्त्वम्' इति व्यपदेशस्तथापि नासतो वस्तुता। तेन "विनाशकाले

---

१ न चोत्प—आ० हा० वि०। २—ध्वंसाभावः भां० मां०। ३—वृत्तत्वा—भां० आ० विना। ४ तद्भेदात् भ भेदात् भ भेदं वा० बा०। ५—न्तरं स—भा० मा०। ६—स्याभ्येभिघा—आ० हा० वि०।—स्याभ्यभिघा—वा० बा०। ७—शहेतुर्न भा० मा०। ८—था — हेतवो भां० मां०।—था दहेतवो आ०।—थादहेतवो हा० वि०। ९—कारिणः नैवं हा० वि०।—कारिणः ति(ते)वं आ०। १०—शस्य संज्ञा—भा० मां०।—शस्य सोऽहेतुस्तस्य संज्ञायतो कथ—वा० बा०। ११ नत्वेवं भां० मा० आ० हा० वि०। १२ अत्रा—वा० बा०। १३—ति चेत् अस—वा० बा० विना। १४—द्धयादीनां नामस्य प्रलापनात्वात् वा० बा०। १५—लम्भावनि—भां० मा०। १६ न चैक—आ० हा० वि०। १७—कदोपलब्धा—वा० बा० सा० मा० आ० वि०। १८ न च कार्यं न च कार्यनि—वा० बा०। १९—लम्भः प्र—भा० मा० आ० हा० वि०। २०—र—विल्पनास—बा० वा०।—रविकालनास—आ० हा० वि०। २१ अथचैकै—मा० मां०। २२—नाशिना—भा० मा०। २३—मर्थ्यं च बिभ्रा—भा० मा०। २४—च निरुध्यत—भां० मा० वि०।—च विरुत—वा० वा०। २५—च नाशस्य आ० हा०।—च नास्य वि०।—च नाशस्य वि० स०। २६— द्रूपपत्तैव यतो—मा०।—द्रूपपतैव यतो—मा०।—द्रूप वि यतो—आ०। २७ यतो वै—वा० बा० विना। २८ न चै परीत्यं तत्त्वमुच्यते न चैव तद्वि—भा० मा०। २९—यदि किञ्चिद्रूपो ध्वं—आ०। ३० "किं पुनस्तत्त्वम्? सतश्च सद्भावः असतश्च असद्भावः" १, १, १ न्यायद० भा० पृ० २ पं० ५। "किं पुनस्तत्? सदसती तत्"—न्यायवा० पृ० ३ प० ८। "किं पुनस्तत्त्वम्?××××सदसती" इति—न्यायवा० ता० टी० पृ० १३ पृ० ११।

न[1] तस्य किञ्चिद् भवति, न भवत्येव केवलम्, अन्यथा कस्यचिद् विधाने न[2] भावो निवर्त्तितः स्यात्" [ ] इत्यप्रस्तुताभिधानं भवेत्।

यदपि 'कृतकोऽपि विनाशो नित्यः, अकृतकोऽपि प्रागभावो विनाशी' इत्यभिधानम्, तदपि न न्यायानुगतम्। अथ भावानां[4] कृतकाऽकृतकानां ध्वंसिता-स्थैर्यलक्षणो[5] धर्म एकान्तिकः, न च भावधर्मोऽभावेष्वध्यारोपयितुं युक्तः। कुतः पुनरयमैकान्तिको भावधर्म इत्यवसितम्? अन्यथा भावस्यानुपलम्भादिति चेत् नन्वनुपलम्भोऽयं भवत्प्यात्मादेः सत्ताया अनिवर्त्तकोऽन्यत्र कथमन्यथाभावं निवर्त्तयेत्? न[7] चात्मनोऽनुमानेनोपलम्भादिति वाच्यम्, यतोऽनुमानेऽप्यनुपलम्भ एव हेतोः विपक्षवृत्तिं कथं निवर्त्तयति? अथ कृतकाकृतकानां पदार्थानां हेतुकृतविनाशेतरस्वभावदर्शनादव्यभिचारः यद्येवं यस्यैव घटादेः कृतकस्य विनाशकारणवशाद् विनाशो दृष्टः स एव ततस्तथा निश्चीयताम् नान्यः कृतकत्वसाधर्म्यमात्रेण। नहि घस्रे रागस्य एव स्वहेतुसन्निधिसापेक्षस्यावश्यम्भाविना(ता) तद्धेतुसन्निधेरप्यपरहेतुसन्निधिसापेक्षत्वात्, 'न चावश्यं हेतवः फलवन्तः' इत्युक्तम्। अथ सापेक्षोऽपि वाससि रागः सर्वत्र यद्युपलभ्यते किमित्यवश्यंभावी न भवेत्? न च तथोपलभ्यते अन्यथापि तस्य ग्रहणात् एवं यदि नाशस्याप्यन्यथापि भाव उपलभ्यते तदा सापेक्षत्वान्नावश्यंभाविता भवेत् न चैवं सर्वत्र[?? कृतके[11] श(विनाश)स्योपलब्धेरिति, असदेतत्; भवतु समस्तवस्तुव्यापिज्ञानाभावात् भावेऽनुमानवृत्तेन[12] वैफल्यापत्ति(त्तिः) ??] हेतुबलादुपजातध्वंसस्य कस्यचिद् दर्शनेऽपि[13] कारणप्रतिबद्धजन्मनामन्यथापि दर्शनात्, उपजातशङ्को देशादि[14]विप्रकृष्टेषु भावेषु कथं तथाभावं निश्चिनुयात्? यद्यपि वा(चा)कृतकानां[15] विनाशं(शो) नोपलब्धः तथापि कालान्तरे तदा वा असौ हेतुनिमित्तो न सम्भवीति[16] कुतो निश्चयः[17]? न वा(चा)कृतकः प्रागभावस्तद्विनाशो वा सम्भवतीति प्रतिपादितम्। ततोऽसमर्थो विनाशहेतुरिति स्थितम् व्यर्थश्च। तथाहि—यदि स्वभावतो नश्वरो भावः न किञ्चिद् विनाशहेतुभिः तत्स्वभावतयैव तस्य स्वयं नाशतः—नहि स्वयं पतति पातप्रयासः फलवान्। अथानश्वरस्तदा तत्स्वभावस्यान्यथाकर्तुमशक्यत्वाद् व्यर्थो नाशहेतुः। न च[19] व(च)लरूपतायां तदुपयोगः, यतो नास्माभिः कार्ये[20] भावानां व्यापारः प्रतिक्षिप्यते किन्त्वचल[21]रूपतैव। ततो भावानामुद्भूता[22][?? भावस्य भावपूर्वस्तु पूर्वको प्रच्युत एवेति तथोपलब्ध्यादिप्रसङ्गः ??] यश्च विनाशहेतोरस्थिरस्वभावो घटादेर्भवति कथं स[23] सस्य(तस्य) स्वभावः तस्मिन्निष्पन्ने भिन्नहेतुकः? यतो न[24] तत्स्वभावो युक्तः। न च[25] स्वहेतुभिरेव[26] नियमितस्वभावोऽयं कालान्तरस्थायी पदार्थानां हेतुभिर्जनित इत्युत्पादानन्तरं[27] न विनष्टः स तस्मिन्नेव स्वभावे व्यवस्थितः कथमन्तेऽपि[28] नश्येत्? तथाहि—उदयकाले यः स्वभावः स्थिरः तत्स्वभाव एवायमन्तेऽपीति पुनस्तावन्तमेव कालं तिष्ठेत्, तथा तदन्तेऽपि[29] तावन्तमपरम् कालान्तरस्थितिरूपस्योदयकालभाविनः[30] स्वभावस्य तदन्तेऽपि भावात्। न ह्यन्तेऽपि रूपान्तरसम्भवस्तस्यैकस्वभावत्वात् अकिञ्चित्करस्य च विरोधित्वाऽयोगात् तत् कथं तदपेक्षोऽयं निवर्त्तेत? दण्डादिप्रपातसमयेऽस्य प्रच्युतिलक्षणः स्वभावः स किं प्रागासीत्[31] येनाऽसौ

1 "न तस्य किञ्चिद् भवति, न भवत्येव केवलम्"—आप्तमीमां० प० ३ श्लो० ५२ अष्टश० पृ० २८ पं० ३०। अष्टसह० पृ० २०० पं० १३। २–धाने भावो भां० मां०। ३–स्यत्रप्र–वा० बा० विना। ४–वानां कृतकानां आ०।–वानां कृताकानां वा० बा०। ५–सितांस्थै–भा० मा० हा० वि०।–सितांस्थै–आ०। ६ नन्वनु–आ० हा० वि०। नचनु–भां० मां०। ७ न चात्मानु–भा० मां०। न चात्मानु–आ० हा० वि०। ८ न वा–आ० हा० वि०। ९ पृ० ३४६ पं० १८। १०–स्यान्य–वा० बा०। ११–तकेशास्यो–वा० बा०। १२–वृत्ते द ष्टं न विफल्यापत्ति हे–वा० बा०। १३–पि कर– वा० बा० विना। १४–शादिप्र–वा० बा०। १५–कानां विनाश नो–हा० वि०। १६ सम्भवाति आ० हा० वि०। १७–श्चया न आ०।–श्चय न हा०।–श्चये न वि०। १८–तक प्रा–वा० बा० भा० मां० विना। १९ च वल–वा० बा० विना। २० कार्यै भा–वा० बा०। २१ किन्त्वन्नल–भां० मां०। २२–नामुद्भूताभावस्वभावपूर्वस्तु पूर्वस्तु पूर्वको भा० मा०।–नासुद्रूपताभावस्वभावपूर्वस्तु पूर्वको आ०।–नासद्भूताभावस्वभावपूर्वस्तु को प्रत्युत–हा० वि०। २३ स त्यस्य स्वभा–भां० मां० आ० हा० वि०। २४ न तस्वभावे यु–वा० बा०। २५ च स्वभावो युक्तः न च स्वहे–भां० मां०। २६–तुभिरिति च निय–वा० बा० भा० मा० विना। २७–दानांतरं आ० हा० वि०। २८–पि नाशात् वा० बा०। २९ तदन्वेति ता–वा० बा०। तदान्तेपि ता–आ०। ३०–भाविनश्च भा–आ०।–भाविन स्वभा–वा० बा०। ३१ प्रागासी–वा० बा०।

व निवृत्तः ? नहि तदभावेऽपि पररूपेणायं निवर्त्तते स्वरूपं च तदेवास्य प्रागपि कथं न निवृत्तिः ? हेतवश्चानुपकार्यापेक्षायां नियुञ्जानाः स्वकार्यमात्मनोऽस्थानपक्षपातित्वमाविष्कुर्युः, न च भवताम् प्यकिञ्चित्करमपि मुद्गरादिकमपेक्ष्य कथं प्रवाहो निवर्त्तते इति वाच्यम् यतो न विशरारुक्षणव्यतिरेको(क्य)परः प्रवाहो विद्यते यो निवृत्तावकिञ्चित्करं मुद्गरादिकमपेक्षते किन्तु परस्परविविक्ताः पूर्वापरक्षणा एव, ते च स्वरसत एव विरु(निरु)ध्यन्त इति न क्वचिदकिञ्चित्करापेक्षानिवृत्तिः अतो मुद्गरादिरहिता सामग्री अविभक्तं कार्यं सम्पादयन्ती तत्सन्निधाने विभक्तं कार्यान्तरं जनयति वं तु मुद्गरादयः कारणसामर्थ्यं खण्डयन्ति, विकल्पत्रयस्यात्रापि पूर्वोदितस्य प्रसङ्गात् । अतो यदुक्तम्—

"स्वभावोऽपि स तस्येत्थं येनापेक्ष (?) निवर्तते ।
(?) विरोधिनं यथाऽन्येषां प्रवाहा मुद्गरादिकम्" ॥ [ ] इति,

तदपि प्रतिक्षिप्तं द्रष्टव्यम् । अथायं विकल्पः सर्वत्रगत्वादसारः (?) तथाहि—उत्पादेऽप्येवं शक्यते एव वक्तुं स्वभावतो ह्युत्पत्तिस्वभावस्य न किञ्चिदुत्पत्तिहेतुभिस्तत्स्वभावतयैव स्वयमुत्पादात्, अनुत्पत्तिस्वभावस्य तु स्वभावतो व्यर्था उत्पत्तिहेतवः तद्भावान्यथात्वस्य कर्तुमशक्यत्वादिति, नैतत् सारम्, यतो यद्युत्पत्तिरभूत्वा भवनलक्षणैव—अन्यथा तदयोगात्—स्वभावो यस्य स तथोच्यते तदा सिद्धसाधनमेव, यस्य ह्यभूत्वा भ(?)वत्सम्पन्नस्तत्रोत्पादहेतूनां व्यापारामीष्टत्वात् सतो निवर्त्तयितुमशक्यत्वात् कार्य-कारणयोः सहभावेनानिवृत्तेः, अथोत्पत्तौ स्वभाव आसिसुव्यलक्षणो यस्य सन्निहितसर्वकारणकलापानन्तरभाविन इत्यभिधातुमभिधेयं तदा कथमस्योत्पत्तिहेतूनां वैयर्थ्यम् ? नहि तथाभूतकारणवशात् तथाव्यपदेशहेतोर्व्यर्थता युक्ता । अथ द्वितीयो विकल्पः सोऽप्यनुपपन्नः यतोऽनुत्पत्तिर्भावप्रतिषेधमात्रं स्वभावः सर्वसामर्थ्यविरहलक्षणस्याभावस्य तत्र चानभ्युपगमाद्धेतुव्यापारस्य सिद्धसाध्यतैव, न ह्युत्पत्तिहेतवोऽभावं भावीकुर्वन्ति, भावेष्वपि परिणामस्तावदयं न सम्भवति मुत(किमुत) नीरूपेऽभावे ? नत्वे(न्वे)वं कथमसदुत्पद्यत इत्युच्यते ? कारणानन्तरं यः सद्भावः स प्रागसन्नित्ययमत्रार्थः न पुनरभावो भावत्वमापद्यत इति न कश्चिद्दोषः अन्यथानुपपत्तावनन्तरभावाभावे धर्मो यस्यासन्निहितकारणस्य च स एवमभीष्टस्तदापि तत्राऽसत्त्वादेव कारणानां व्यापारो न भवतीति न काचित् क्षतिः, लोके चोत्पत्तिधर्मोऽनागत एवोच्यते, न च तस्य शशविषाणस्येव तीक्ष्णतादिगोचराणामिव भावाश्रयाणां विकल्पानां सम्भवः, न च यदि निर्हेतुको भावस्य विनाशः उत्पादोऽपि तथैवास्तु भावभाव(?)धर्मत्वाविशेषात् यतो न विनाशो नामाऽन्य एव कश्चिदुदयापवर्गिणो भावात् भावश्च स्वहेतोरेव तथाभूत उत्पन्नो न कश्चिद्धर्मोऽस्या(?)न्निमित्तः केवलं तमस्य स्वभावं पश्यन्नपि मन्दबुद्धिर्न विवेचयति दर्शनपाटवाऽभावात् यदा तु विसदृशः(श)कपालादिविधुरप्रत्ययोपनिपाताद् उत्पद्यते तदा भ्रान्तिकारणविगमात् प्रत्यक्षनिबन्धनो निश्चय उत्पद्यते, अनुमानतो भावानां सुविदुषां प्रागपि भवत्येव, यथा विषस्वरूपदर्शनेऽप्यतत्कारिपदार्थसाधर्म्यविप्रलब्धो न मारणशक्तिं नि(निश्चि)नोति प्राक् पश्चात् तु विकारदर्शनात् तन्निश्चयः, न च शक्तिमतः शक्तयो भेदमनुभवन्तीति प्रतिपादितं सौगतैः । जातस्य च स्वभावस्य विनश्वरत्वेऽन्यानपेक्षणान्निर्हेतुको विनाश उच्यते इति स्थितमेतत् यथोक्तप्रकारेणानु-

---

१–चास्या प्रा–आ० हा० वि० । २–माविष्कु–वा० बा० । ३–द्यते माया निवृ–आ० ।–द्यते मोया निवृ–हा० वि० । ४ विरुध्यत इ–भां० । विरुध्यत इ–मा० । ५–रादिना र–वा० बा० विना । ६–रहित सा–आ० । ७–धाने पिभ–वा० बा० विना । ८ न तु मु–भा० मा० आ० हा० वि० । ९ । तथा–वा० बा० विना । १०–द्ऽवसारः वा० बा० । ११ तदयो–भा० मा० । १२–त्वा भावत्स–वा० बा० । १३–भावास्या भीष्ट–भां० मा० ।–भावास्यामीष्ट–आ० ।–भावस्या अभीष्ट–हा० वि० । १४–स्यारवाभी–वा० बा० । १५–ना वृ–वा० बा० । १६–स्य सनिहि–भा० मा० । १७–मभिधेयः त–भा० मा० । १८–थाज्ञत–वा० बा० । १९–पपन्नाव–वा० बा० । २० धर्मो यस्या–भा० मा० । २१–धर्म्येतानग ए–आ० ।–ध गत ए–हा० वि० । २२ भावतावद्य–वा० बा० । २३ कश्चिद्धर्मा स्या–हा० वि० । २४–दुषो प्रा–आ० ।–दुषां प्र–वा० बा० । २५ यवां वि–आ० । यवा वि–हा० वि० । २६–विषयरू–वा० बा० विना । २७–लब्धो न वा० बा० भा० मा० विना । २८ न कारण–वा० बा० विना । २९–शक्ति नितोति आ० ।–शक्तिं मिनोति वि० सं० ।–शक्तिं तोति वा० बा० ।

मानतो भावानां क्षणक्षयः सिद्धः, प्रत्यक्षतोऽपि क्षणक्षयाधिगमे तद्व्यवहारसाधनानुमानं साफल्यमनुभवतीत्यपरे प्रतिपन्नाः। तदेवं प्रत्यक्षतः अनुमानतश्च क्षणिकत्वव्यवस्थितेः स्थितमेव तद्[1] मूलाधारः पर्यायनयस्य ऋजुसूत्रवचनविच्छेद इति। तस्य ऋजुसूत्रतरोः 'तुः' अवधारणार्थः तेन तस्यैव न द्रव्यास्तिकस्य शब्दादेय। शब्दार्थं गमयन्तः शब्दनयत्वेन प्रतीताः शब्द--समभिरूढैवंभूताख्यो नयाः शाखाप्रशाखा इवं स्थूलसूक्ष्मतर( लसूक्ष्मसूक्ष्मतर )दर्शित्वात् सूक्ष्मो भेदो विशेषो येषां ते तथा। यथा हि तरोः स्थूलाः शाखाः, सूक्ष्मास्तत्प्रशाखाः, प्रतिशाखा अति( शाखाश्च ) सूक्ष्मतराः एवम् ऋजुसूत्रतरोः[10] स्थूल-सूक्ष्म-सूक्ष्मतराः शाखाप्रशाखाः (शाखाप्रशाखा)प्रतिशाखारूपा अशुद्धशुद्धतर-(अशुद्ध-शुद्ध-शुद्धतर)पर्यायास्तिकरूपाः शब्द-समभिरूढैवंभूताख्यो नयाः द्रष्टव्याः। तथाहि-ऋजुसूत्राभ्युपगतं क्षणमात्रवृत्ति वस्तु दिंगा(लिङ्गा)दिभेदाद् भिन्नं शब्दो वृक्षाच्छाखामिव सूक्ष्ममभिमन्यते एकसंज्ञं समभिरूढः शब्दाभिमतं वस्तु संज्ञाभेदादपि भिद्यमानं शाखातः प्रशाखामिव सूक्ष्मतरमध्यवस्यति, तदेव समभिरूढाभिमतं वस्तु शब्दप्रतिपाद्यक्रियासमावेशसमय एवं स्थिति(?)भूत एवंभूतः क्रियाभेदाद् भिन्नं प्रशाखातः प्रतिशाखामिव सूक्ष्मतममधिगच्छत्येवं बाह्यार्थाभ्युपगमपरः शब्द-समभिरूढैवंभूतभेदवानवगन्तव्यः।

[ २ ऋजुसूत्रपदस्य द्वितीयां व्याख्यामाश्रित्य विज्ञप्तिमात्रवादः ]

[ पूर्वपक्षः-बाह्यार्थवादिभिः सौत्रान्तिक-वैभाषिकैः विज्ञप्तिमात्रस्य निराकरणम् ]

अथवा ऋजु बाह्यापेक्षया ग्राहक-संवित्तिभेदविकलमविभागं बुद्धिस्वरूपमकुटिलं सूत्रयतीति ऋजुसूत्रः शुद्धः पर्यायास्तिकः।

ननु किमविभागबुद्धिस्वरूपावेदकप्रमाणसद्भावतो विज्ञप्तिमात्रमभ्युपगम्यते, आहोस्विदर्थसद्भावबाधकप्रमाणसद्भतेरिति वक्तव्यम्। तत्र यद्याद्यः पक्षः स न युक्तः, यतस्तथाभूतविज्ञप्तिमात्रोपग्राहकं प्रत्यक्षं वा तद् भवेत् अनुमानं वा प्रमाणान्तरस्य सौगतैरनभ्युपगमात्? तत्र न तावत् प्रत्यक्षमर्थसंस्पर्शरहितं विज्ञप्तिमात्रमेवेत्यधिगन्तुं समर्थमर्थाभावनिश्चयमन्तरेण विज्ञप्तिमात्रमेवेत्यवधारणाधिगमानुपपत्तेः। उक्तं च-

"अयमेवेति यो ह्येष भावे भवति निर्णयः।
नैष वस्त्वन्तराभावसंवित्त्यनुगमादृते" ॥ [श्लो० वा० अभाव० श्लो० १५]

न चार्थाभावोऽध्यक्षसमधिगम्यः अर्थविभासकत्वेन तस्योत्पत्तेः, न च तत्रावभासेऽपि तस्याभावः विज्ञप्तेरप्यभावप्रसक्तेः न च तैमिरिकाक्षजप्रतिभासे चकासदिन्दुद्वयं यथाऽसत्यत्वमनुभवति तथा शुद्धदृक्प्रतिभा(भास)विषयस्यापि स्तम्भादेरपि वितथा(थ)त्वं यतस्तिमिरपरिकरितदृग्विपर्य-

1 तद् मूलधा-वा० बा० भां० मा०। अत्र 'स्थितमेतद् मूलाधारः' इति चारु भाति। २-जुनयसू-भां०। ३ तत्र ऋ-वा० बा० विना। ४-रणोर्थस्ते-भां० मां०। ५-द्य थं ग-आ०।-द्य शब्दोदर्थं ग-हा० वि०।-दर्थं ग-वा० बा०। ६-दर्थं ग-भा० मा० विना। ७ शाखा इव वा० बा०। ८-च मूलसूक्ष्मतर-आ० मा० आ० हा० वि०। ९-खाः प्रतिशाखा अतिसूक्ष्मतरा ए-भां० मां०।-खा सू-आ०।-खाः सूक्ष्मास्तत्प्रशाखाः सूक्ष्मा तत्प्राशाश्च स्तत्क्षतरा ए-वा० बा०। १०-तरो मूलःसूक्ष्मसूक्ष्मतरा शाखारूपा अ-भा०।-तरो स्थूलःसूक्ष्मसूक्ष्मतरा०शाखारूपा अ-भां०।-तरो स्थूलसूक्ष्मतराः शाखाः प्रशाखाः प्रतिशाखारूपा अ-वा० बा०। ११ स्थूलः सु-आ०। १२-तरा शा-आ० हा० वि०। १३-रूपा श-भा० मा० आ०। १४-स्तु दिगादि-वा० बा० विना। १५ वृक्षाच्छा सिव सूक्ष्माभिम-वा० बा०। १६ एकं सं-आ० हा० वि०। एकसंज्ञा स-वा० बा०। १७ तदेवं स-वा० बा० विना। १८-च्च व स्थि-भा० मां०।-व च स्थि-वा० बा०। १९-भूताः क्रि-वा० बा० विना। २०-भूताभेदावा-वा० बा०। २१-भागबु-आ०। २२-द्वनप्र-वा० बा०। २३ "तथाभूतविज्ञप्तिमात्रं(त्र)ग्राहकं प्रत्यक्षम् अनुमानं वा?"-प्रमेयक० पृ०२१ प्र० पं० १। २४-रहितवि-आ०। २५ प्रमेयक० पृ० २१ प्र० पं० २। २६-भासेऽपि वा० बा०। २७ "न च तैमिरिकप्रतिभासे प्रतिभासमानेन्दुद्वयवन्निर्मलमनोऽक्षप्रभवप्रतिभासविषयस्यापि असत्त्वमिति अभिधातव्यम्"-प्रमेयक० पृ० २१ प्र० पं० ४। २८-यस्या बाध्य-भां० मां०।

